**कै० श्रीमंत रामराव अमृतराव ऊर्फ आबासाहेब डफळे.**

चीफ् ऑफ जत.



विद्वन्मान्य सुधी कलासुकुशला धीरा सुवीरोत्तमा
विद्या विक्रम उद्यमोद्यतकरा साजे न अन्योपमा ।
प्रेमें अर्पितसें नृपा तव करीं गीर्वाण ज्ञानेश्वरी
सेवा सादर हो नृपाल डफळे रामप्रभो साजिरी ॥ १ ॥

( श्रीमंत विजयसिंह रामराव उर्फ बाबासाहेब डफळे चीफ ऑफ जत
यांचे खास परवानगीनें हा फोटो छापला आहे. )

# अर्पणपत्रिका.



आपल्या अविरत उद्योगानें व प्रेमळ आचरणानें
ज्यानीं सज्जनाचीं मनें आकर्षून घेतलीं,
असे प्रजावत्सल कैलासवासी,
**श्रीमंत रामराव आबासाहेब डफळे**
याच्या आश्रयानें तयार झालेली
ही
**श्रीज्ञानेश्वरीची संस्कृत प्रतिकृति**
सस्थानचीं अधिकारसूत्रें अल्प वयातच धारण करून
आदर्शभूत आपल्या पुण्यकीर्ति पित्याला निरपेक्ष प्रजापालनानें
व
मातृसेवेनें संतोषविणारे (गुणी) सज्जन प्रेमी
भगवत्कृपाभिलाषी
**श्रीमंत विजयसिंहराव रामराव डफळे**
**जत संस्थानाधिपती याना**
मोठ्या प्रेमानें अर्पण
केली असे.

जत, ता. ११।७।३१

**अनंत विष्णु खासनीस,**
न्यायाधीश जत

श्रीः

# गीर्वाणज्ञानेश्वरी



## द्वितीयो भागः

अस्य

अनुवादकः प्रकाशकश्च

जतसंस्थानवासी खासनीस इत्युपाह्वः

श्रीमद्विष्णुशर्मतनयोऽनन्तशर्मा

बी. ए. एल् एल् बी, न्यायाधीशः



शाकः १८५३, ईसवीयाब्दः १९३१



# श्रीज्ञानेश्वरो विजयते




भवद्गिरां ज्ञानराज कृतो गीर्वाणभाषया ।
अनुवादो यथाप्रज्ञमर्प्यतेऽसौ भवत्करे ॥ १ ॥

# सानुनयावेदनम्–

योगींद्रज्ञानदेवेन कृता भावार्थदीपिका ।
गीतार्थं विशदीकर्तुं जगदुद्धारहेतवे ॥ १ ॥
या वर्वर्ति महाराष्ट्रभाषालङ्कारवद्भुवि ।
ज्ञानेश्वरीति विख्याता देववत्पूज्यतेऽखिलैः ॥ २ ॥
यस्या गाम्भीर्यतोऽर्थज्ञाः संप्रदायीकृतात्मसु ।
द्वित्रा वा पंचषा वापि दृश्यंते वसुधातले ॥ ३ ॥
यस्याः संसेवनात्साक्षान्मुकुंदः श्रीनिकेतनः ।
प्रयच्छति नृणां ज्ञानमिहामुत्र सुखास्पदम् ॥ ४ ॥
तस्या एवानुवादोऽयं कृतो गीर्वाणभाषया ।
वाग्गुंफेन ममानेन प्रीतो भूयाज्जनार्दनः ॥ ५ ॥
पुनामि वाणीं सेवेय सज्जनान् प्रीणये हरिम् ।
एतदर्थं कृतो यत्नो न ज्ञातृत्वप्रसिद्धये ॥ ६ ॥

# किंचिन्निवेदनम्—

ज्ञानेशो भगवान्विष्णुः पांडुरंगश्च मूर्तिमान् ।
महाराष्ट्रः सतां श्रेष्ठो बुद्धिमत्सु प्रकाशकः ॥
गीतार्थानकरोट्टीकां सर्वेषामुत्तमोत्तमाम् ।
श्रीकृष्णभगवद्धृद्यं यत्राह हृदयामृतम् ॥
श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।
एकया विकलः काणो द्वाभ्यामंधः प्रकीर्तितः ॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं च वै स्मृतिः ।
जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते ॥

द्विजविषये वेदाभ्यासो मुख्यः । तथाच ऋग्वेदसंहितायाम्–'यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पंथाम्'इति । तस्मात्स्वाध्यायोऽध्येतव्य इति । अध्येतारं पुरुषं तदीयप्रयासाभिज्ञानेन सखिव पालयतीति सचिविद्वेदः बहुद्रव्यप्रयासगाध्यक्रतु-फलस्याध्ययनमात्रेण संपादनं तत्पालनं तदपि आम्नायते । आ० गृ० सूत्रे–'यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छती'ति । ईदृशं सखिविदं वेदरूपं सखायं । यः पुमानध्ययनमकृत्वा परित्यजति तस्य वाच्यपि भाग्यं नास्ति किमु वक्तव्यम् ? तथैव—'देवाधीनं जगत्सर्वं मंत्राधीनं च दैवतम् । ते मन्त्रा ब्राह्मणाधीना ब्राह्मणो मम दैवतम्' इति वचनाद्ब्राह्मणा श्रेष्ठं प्रसिद्धम् । एवं च वेदविदो ब्राह्मणाः श्रेष्ठाः । तत्रापि मदनपारिजाते–'आननानिमित्तं हि सिद्धान्तानि विचारयेत् । केवलानि यदाधीते वेदपाठी भवेद्द्विजः ॥'

धर्मार्थकाममोक्षसाधकोऽयं वैदिकः सनातनो धर्मः । तस्य रहस्यं निहितं गीर्वाणभाषायाम् । प्राकृतजनानामुद्धारार्थं तदेव प्रकटीकृतं ज्ञानराजेन । तद्देशान्यं पृथिवीतलनिवासिनां प्राकृतजनानामुद्धारार्थं गीर्वाणया गिरा प्रकटीकृतं चेत्तद्वाराऽखिलभाषासु प्रकाशनाय सुलभीभवतीति विचार्य श्लोकोऽयं मया प्रयत्न । अधिकारिण एव जानंति तन्मर्म । भगवत्प्रेरणयैव सत्वनाम्ना द्वितीयांश न सेयं भगवत्सेवाकारि मया यथामति । अत्र च सुधारुद्रपरस्परणं बिजापुरस्थ विद्वद्वर आण्णाचार्य वेलुनिभिः, तथा विद्याभूषणतांबेशास्त्रिभिः,

तथा साताराप्रांतस्थ भागवतोपाह्व**सखारामशास्त्रिभिः** कृतं तथापि मुद्रणावसरे ततोऽप्युर्वरितो भागो मुंबापुरस्थसुप्रसिद्धनिर्णयसागराख्यमुद्रणालयगतांकनीयविविधग्रंथशोधनाधिकृतैः **पणशीकरो**पाह्वविद्वद्वरश्रीमल्लक्ष्मणशर्मतनुजनुर्भि**र्वासुदेवशास्त्रिभि**ष्टिप्पण्यादिभिः परिष्कृत्य महतायासेन परिशोधितोऽस्ति तेषां सर्वेषां सुबहूनुपकाराननिशं स्मरामि ।

तथैव **श्रीकोटणीसमहाशयाः, उपासनीबाबाः, नारायणमहाराजाः, सिद्धारूढाः, गुलाबदासवैष्णवमहाराजाः, अमळनेरकरादिवारकरीसांप्रदायिकाः** संतश्चास्मिन्नाशीर्वाददातारः । **जतसंस्थान-कुरुंद्वाड–औंधा**दिसंस्थानिकमहाराजाः प्रेम्णा साहाय्यकाः । **प्रो. रानडे** इत्यादयोऽर्वाचीनतत्त्वज्ञा अप्यत्यंतसाहायका इत्यत्र केवलं स्मृताः संति । नात्र विशेषं ब्रूमः । एतत्संबंधेन यल्लेख्यं तद्ग्रंथसमाप्तौ सविस्तरं निवेदयिष्यते ।

ब्राह्मणानां कृपाप्रसादमंतरा न भवति कस्यापि कर्मणः साफल्यमिति श्रीमद्ज्ञानराजैः नवमेध्याये प्रपंचितं प्रसंगात्किंचित्प्रदर्श्यते—

सर्ववर्णेषु ये श्रेष्ठाः सर्वलोकाधिकारिणः ।
आकराः सर्वविद्यानां मूर्धन्या ब्राह्मणाः स्मृताः ॥ ४७५ ॥
ये भूचरा भूमिदेवास्तपोमूर्तय एव च ।
तीर्थानामपि माहात्म्यमुद्भूतं तेभ्य एव तु ॥ ४७६ ॥
संति येषु सदा वेदा वेदप्रावरणं च ये ।
कृपाशीर्वचनैर्येषां कल्याणं वर्धते सदा ॥ ४७७ ॥
यदास्थामृततोयेन वृद्धिः सत्कर्मणां भवेत् ।
येषां सदिच्छासामर्थ्यात्सत्यत्वं ह्यस्ति जीवितम् ॥ ४७८ ॥
येषां च वैदिकैः शब्दैरग्नेरायुष्यवर्धनम् ।
समुद्रेणात्मनस्तोयं येभ्यः प्रेमार्थमर्पितम् ॥ ४७९ ॥
मयाऽपसारिता लक्ष्मीः कौस्तुभोऽपि धृतः करे ।
येषां पादरजःप्रासौ हृदयं पुरतः कृतम् ॥ ४८० ॥
ब्राह्मणांघ्र्युदितं लक्ष्म धृतं वक्षःस्थले मया ।
गांभीर्यस्यैव रक्षार्थं पार्थान्यन्नास्ति कारणम् ॥ ४८१ ॥
कालाग्निरुद्रसदनं येषां क्रोधः प्रजायते ।
प्रसादेऽखिलसिद्धीनां लब्धाः स्युः सर्वसिद्धयः ॥ ४८२ ॥

एव हि ब्राह्मणा पूज्या स्वत सुकृतराशय ।
अजका याति मद्रूपमिति किं तत्समर्थनम् ॥ ४८३ ॥

तेषा प्रसादफलविषये दृष्टान्तस्तैव—

विपदाहस्य शाति स्यादिति निश्चित्य सादरम् ।
शकरेण कलाधोपि ललाटे विधृतो विधु ॥ ४८६ ॥ तथा ॥

तेषु परमपूज्य वरेण्यो दिवाकरभट्ट• रामतीर्थनिवासी ८४ वर्षीयो विद्याज्ञानतपोवृद्ध सागोपागषडगवेदाध्यायी वेदवेदातधर्मव्यवहारादिषु कुशल कर्मकांडज्ञानकाडचतुर ऋग्वेदातर्गताश्वलायनशाकलशाखाध्यायी योगी गायत्रीपुरश्चरण–श्रीदत्तोपासनाया महत्व स्मार्ताग्न्युपासनयास्तथा वेदविहितवर्णाश्रमधर्मतत्प्रवृत्तिनिवृत्तिलक्षणसनातनधर्मस्य महत्व च समबोधयत् तत्फलं च न्यवेदयत् । तत्कृपया तदनुज्ञया ज्ञानेश्वर्या गीर्वाणानुवादमकरवम् ।

गीर्वाणज्ञानेश्वर्यां प्रथमाध्याये विज्ञप्ति —

अविहाय निज स्थान चन्द्रस्याभ्युदयात्सुखम् ।
अनुरागयुता भुक्ते स्फुट कुमुदिनी यथा ॥ ६० ॥
ये त्वर्जुनसमा पात्रया येषा श्रवणयोग्यता ।
ते साधव कृपापूर्णा पिबन्तु रसमुत्तमम् ॥ ६२ ॥
गाम्भीर्यात्सुस्थिरा यस्य स्मृत करणवृत्तय ।
कुसपक्षस्स एवास्य रहस्य वेत्ति तत्वत ॥ ६१ ॥
अगाध भवता चित्तमतो मे विनति प्रभो ।
निवेदन ते मिश्रत्वात्पादवदनपूर्वकम् ॥ ६३ ॥
पितृमातृस्वभावोऽयं सतोषो जायतेऽधिक ।
अपत्यस्य समाकर्ण्य वाणीमस्पष्टसुन्दराम् ॥ ६४ ॥
अंगीकृतोऽय युष्माभि सज्जनैरात्मसात्कृत ।
तस्मात्पूर्ण च क्षतव्य सहन प्रार्थना विना ॥ ६५ ॥
अज्ञात्यमित्यविज्ञाय धार्ष्ट्यं मे मनसा कृतम् ।
अभिक्रामति खद्योत किं भानु स्वेन तेजसा ॥ ५७ ॥
टिट्टिभि कुरुते चच्च्वा सागरस्य परिच्छेदम् ।
तथैवाह प्रवृत्तोऽस्मि ग्रेथग्रन्थानुवादने ॥ ६८ ॥
आकाश परिमातु च प्रयतेत ततोऽधिक ।
अपेक्ष्य यथाऽज्ञत्वं तथा निर्धारण मम ॥ ६९ ॥

शंभुर्विचारयामास गीताया ह्यर्थगौरवम् ।
सदा सुविस्मिता गौरी प्रश्नमेनं चकार ह ॥ ७० ॥
तामुवाच हरो देवि स्वरूपं ते यथा नवम् ।
गीतातत्त्वं तथा ज्ञेयमपारं नित्यनूतनम् ॥ ७१ ॥
निद्रायां श्वासरूपेण जातो वेदार्थसागरः ।
सर्वेश्वरः स्वयं साक्षाद्वादीज्जागरेऽर्जुनम् ॥ ७२ ॥
तथाऽगाधमिदं यत्र वेदानां स्तंभिता मतिः ।
अल्पस्य मतिमंदस्य वर्णने का कथा मम ॥ ७३ ॥
अपारं तत्कथं पारं भवेत्तेजस्त्वमुज्ज्वलम् ।
गगनं मशकस्येव कथं मुष्टिगतं भवेत् ॥ ७४ ॥
श्रीगुरुः सानुकूलोऽत्र चाधारः केवलं मम ।
भक्तिमांश्च तदुक्त्यैव ज्ञानदेवो वदाम्यहम् ॥ ७५ ॥
अविवेकी च मूर्खोऽहं यद्यपि स्यां तथापि तु ।
साधूनां च कृपादीपः सोज्ज्वलोऽयं प्रकाशकः ॥ ७६ ॥
स्पर्शस्यैव हि सामर्थ्यं लोहः कनकतां भजेत् ।
अमृतस्यैव सा सिद्धिर्लभते जीवनं मृतः ॥ ७७ ॥
मूकं करोति वाचालं येन सिद्धा सरस्वती ।
अहो किमेतदाश्चर्यं वस्तुसामर्थ्यमीदृशम् ॥ ७८ ॥
माता कामदुघा यस्य तत्सुतं किमु दुर्लभम् ।
तस्मादहं प्रवृत्तोऽस्मि चिकीर्षुर्ग्रंथसंग्रहम् ॥ ७९ ॥
न्यूनं संपूर्णतां यातु यत्किंचिदधिकं मतम् ।
तत्सर्वं त्यज्यतामेव एषा वो विनतिर्मम ॥ ८० ॥
दीयतामवधानं मे युष्मदुक्त्या वदाम्यहम् ।
सूत्राधीनं दारुमंत्रं चेष्टते तु यथा तथा ॥ ८१ ॥
सतामनुगृहीतोऽहं तदाज्ञाधारकः सदा ।
अलंकुर्वंतु ते सन्तो यथेष्टं मे विधीयताम् ॥ ८२ ॥
प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ यः कश्चित् ॥

---

# गीर्वाणज्ञानेश्वरीप्रस्तावः–

## श्रीज्ञानराजाय नमः

इह खल्वसारे संसारे सकलपुरुषार्थसाधनतया परमकल्याणसाधनस्य भगवद्विषयकज्ञानस्य संपादयित्री श्रीमद्भगवद्गीता समुल्लसतितराम् । श्रीमद्भगवदभिहितसर्वोपनिषत्प्रतिपाद्यार्थसारतया च सेन सर्वत्र विराजमाना प्रसिद्धिमुपगताऽभूत् । अस्याश्च वेदार्थोपबृंहितत्वेन भगवत्पूज्यपादश्रीमदाद्यशंकराचार्यप्रभृतिभिः प्राचीनैरर्वाचीनैश्चापि मधुसूदनसरस्वत्यादिभिर्महाविद्वद्भिर्बहूनि व्याख्यानानि विरचितानि समुपलभ्यन्ते । तेषां च भाष्यादीनां महाव्याख्यानानां दुरवगाहतया स्वल्पमतीनां संस्कृतभाषानभिज्ञानां महाराष्ट्रभाषापरिचितानां सुखबोधाय श्रीज्ञानेश्वरमहाराजैः साधुवर्यैर्भावार्थदीपिकानाम्नी सुविस्तृता टीका विनिर्मिता । सेन भावार्थदीपिका संप्रति लोके **'ज्ञानेश्वरी'**-नाम्ना विराजते । यथा ज्ञानेश्वरमहाराजैः परमकारुणिकतया गीर्वाणभाषानभिज्ञानां स्वल्पमतीनां सकलपुरुषार्थसाधनभूतस्य भगवद्विषयकज्ञानस्य श्रीमद्भगवद्गीतामंदिरस्य गीर्वाणभाषामयस्य कपाटं महाराष्ट्रभाषाघटितस्य श्रीज्ञानेश्वरीग्रंथस्य कीलकेन समुद्घाटितं तथैव वामनपंडितप्रभृतिभिरनेकैः पंडितप्रकाण्डैर्यत्नाः कृताः । यथार्थदीपिकादयो ग्रंथाः तेषामाशयान्स्फुटीकुर्वन्ति । यद्यप्येते सर्वे ग्रंथा आदरणीयाः प्रशंसनीया उपकारकाश्च वर्तन्ते तथापि ज्ञानेश्वरीग्रंथ एवैतावन्तं कालं पर्यंतं सार्वभौमत्वेनेह वर्तते ।

किञ्च ज्ञानेश्वरी भगवद्गीतासूपनिषत्सु समस्तपदपदार्थनिरूपण-

माणा ह्या निरवद्यरूपा नानालंकाररत्नविस्तारितरत्नाकरमाहात्म्या महाराष्ट्रभाषादेवताप्रासादशेखरीभूतास्ति । अहो ! या देवगृहे देवतापीठे विराजते ! यया 'ज्ञानदेवी' इति दुर्लभं पदं निजमाहात्म्येन संपादितं, धन्या सा ज्ञानेश्वरी । ननु भगवद्गीताभिप्रायद्योतकान् पांडित्यप्रचुरान्विद्यमानाननेकान्संस्कृतप्राकृतग्रंथास्तिरस्कृत्य केन हेतुनेयं ज्ञानेश्वरी प्रवीवर्ति ? । अहो नैतच्चित्रं, ज्ञानेश्वराणां भाषा न केवलं पांडित्यदर्शिका शुकवद्वैखरीवाणी । सा परा पश्यन्ती मध्यमा चैतत्क्रमेण समुल्लसतितराम् । हेम्नो मूल्यं सर्वे जानन्ति तस्य संग्रहमपि कुर्वंति किंतु संस्कारहीनः स्वर्णखंडो मूल्यत्वेनैव नृपशिरस्यारोहणकरणेऽसमर्थः तत्र स्वर्णकारस्य कौशलमेव समर्थं तथैव श्रीमद्भगवद्गीतायाः स्थितिः । ज्ञानेश्वरमहाराजैरात्मबुद्धिप्रभावेण श्रीमद्भगवद्गीतासुवर्णेष्टिकाया ज्ञानेश्वरीनामक उपमादृष्टांतरूपकादिनानारत्नांकितोऽतीव मनोज्ञोऽलंकारः समुत्पादितस्तेनैव सा गीता निजरूपांतरेण श्रीज्ञानेश्वरीमिषेण सर्वेषां कंठगताऽभूत् शिरस्यपि च बाभाति ।

अथ यदि ज्ञानेश्वरसाधुवरेण्यैरल्पमतीनां गीतार्थावबोधाय महाराष्ट्रीयवाण्या ज्ञानेश्वरी निबद्धा तर्हि स्थले स्थले या काले काले वा भिद्यते भाषायाः स्वरूपम् । यदेयं ज्ञानेश्वरी निरमायि तदा ज्ञानेश्वरमहाराजैस्तदानींतनानां महाराष्ट्रभाषापरिचितानां सर्वेषां सुशिक्षितानामशिक्षितानामपि जनानां परिचितानां प्रसिद्धशब्दानामेव परिग्रहः कृतः । किंतु व्यतीतेन महता कालेन तदानींतनानामशिक्षितानामपि सुबोधाः शब्दा इदानींतनानां महाराष्ट्रभाषाकोविदानामपि दुर्बोधा अभूवन् । शब्दानां दुर्बोधतायाः प्रकटीकरणार्थं केचित् ज्ञानेश्वरीग्रंथस्थाः शब्दा उदाह्रियन्ते ।

आथि, नऱ्हाळी, अपाडें, सुत्रावें, धिंवसा, गिवसणें, थेंकुलें, कीर इत्यादयः सहस्रशः शब्दाः सम्प्रति महाराष्ट्रभाषाभिज्ञैरपि वेदमंत्रवद्दुर्बोधाः समालक्ष्यंते । नैतदाश्चर्यं संस्कृतभाषाभिज्ञाना इदानींतनाना ऱ्हाँ, ऱ्हीं, ऱ्हूं, ऱ्हैं, ऱ्हौं इत्यादीना मंत्रबीजानामर्थो दुरधिगम एव । यतः कालभेदेन स्थानभेदेन चापि भाषा नामांतरं न प्राप्नोति तथापि भूयसा कालेन भिन्नस्वरूपमाधत्ते । स्थानांतरेण विकृतिमायाति । अत्र प्रमाणम् । वेदमंत्र एव देवतास्थाने पुरा विराजमानोऽसुरशब्दः 'क्षीणे पुण्ये मर्त्यलोकं विशति' इति न्यायेन स्वस्थानात्प्रच्यावित. दैत्यपीठे च स्थापितः । पश्चादसुरस्थाने सुरशब्दः प्रतिष्ठा प्राप । एक एव शब्दस्त्रिषु लिंगेषु वर्तते किमत्र कारण भिन्नस्थानपरिपाठानाम् ? । एवं पदार्थाना नामभेदा अपि स्थानभिदा कालभिदा व्यक्तिभिदा गुणभेदेनोच्चारणभेदेन चापि नानाविधा भवति । तेन योगिरूयोगरूढादयो भेदाः समुत्पन्ना. । यथा—

वैदिकवाङ्मये शीर्षास्थाने शीर्ष्णा इति उच्चारभेदस्योदाहरणं न तत्रार्थभेदः । करी द्विपो द्विरदः इत्यादयः शब्दा गुणभेदान् दर्शयन्ति । करतो, करलें इत्यादयः शब्दा व्यक्तिभेददर्शका एव । दूरशब्दस्योच्चारकरणेऽसमर्थो बालो 'बूर' इति वदति । पापाशब्दो बालकस्य मुखचुम्बनप्रयोगे वर्तते । तथाच बालभाषाया पोलिकास्थानेपि प्रयुज्यते । अत्र पोलिकासदृशं मुखचुम्बनस्य माधुर्यं व्यङ्ग्यार्थेन दर्शितं, नो चेत् पोलिकामुखचुम्बनयो किं साधर्म्यं ? । संसर्गदोषेणापि पवित्राः शब्दा वाच्यता यान्ति । यथा—"शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा" अत्र महाकविकालिदासेनाप्यादरितः शष्पशब्दो दुःसंगात् तिरस्कृतिपदमापन्न. । सुधारकशब्दस्यापि तथैव स्थितिः । सत्यशोधक-

संसर्गात् संप्रति सत्त्वशब्दस्य पदे पदे विडंबना दृश्यते । हा कष्टं !! वैदिकवाङ्मये विराजमान उपोदरशब्दस्तु विकृतरूपेण महाराष्ट्रभाषायां × दरीति रूपेण फाल्गुनोत्सवे नरीनर्ति ।

खलु दुर्निवारा शब्दानामपक्रांतिः । परिवर्तनं च दुर्निवारम् । नात्र विदुषां विद्वत्ता, चतुराणां चतुरता, राज्ञां सत्ता च प्रतीकारकरणे समर्था । यतो मानवानामनुकरणशीलत्वं ज्ञानवैशिष्ट्यं च परिवर्तनकरण-समर्थं सार्वभौमत्वेन विराजते । मानवानां भाषा सर्वत्रैव व्यभिचरति न तथा तिरश्चाम् ।

भवतु । भाषायाः स्वरूपं प्रतिशतकं भिन्नत्वमाप्नोति । ज्ञानेश्वरी-रचनाकालस्तु 'शके बारासें बारोत्तरें । तैं टीका केली ज्ञानेश्वरें ।' इत्येवं तत्रैव स्फुटतरं दृश्यते तेनेतः संवत्सराणां पंचशत्याः पूर्वं विनिर्मितस्य ग्रंथस्य दुरवगाहताविषये किमाश्चर्यम् । पूर्वतनानां ये सुबोधा ग्रंथास्तेऽद्यतनानां दुर्बोधा जाताः, अद्यतनानां ये सुबोधास्ते पश्चात्तनानां दुर्बोधा भवंतीति नियमः । अतएव तत्तत्कालोचितभाषया टीकाग्रंथानामनुवादग्रंथानां च प्रयोजनमस्त्येव । संप्रति ज्ञानेश्वरीग्रंथस्य दुरधिगमतया महाराष्ट्रभाषाविद्भिरनेकैः प्रचलितमहाराष्ट्रभाषया अनुवादाः कृताः । किंतु ये गुणा ज्ञानेश्वर्यां दरीदृश्यंते ते व्याख्यानग्रंथे यथावदानेतुं धर्तारो न शक्ताः । यदि शब्दस्यार्थः कथंचिदवगतस्तथापि तस्येतिहासो नावगतश्चेत् तर्हि कथं जानंति शब्दपंडिता ग्रंथकारस्य हृद्यम् ? अत्रोदाहरणं—

महाराष्ट्रभाषायां 'गडबडगुंडा' शब्दः सर्वेषां परिचितोऽस्ति । विधिहीनं कथंचिदपि त्वरया यत्कर्म क्रियते तत्र 'गडबडगुंडा' शब्दः प्रवर्तते । किंतु 'गडबडगुंडा' शब्दस्य विधि—हीनत्वे किं प्रमाणम् ?

निष्ठोक्यतामस्येतिहास. । मानमापपंथाना पुरोहितो विवाहकाले वधूवरो पृथक् पृथक् शाययित्वा वरं प्रत्युपदिशति—'श्रीकृष्णस्य गडवडगुंडा आगत इत्युच्चार्याळोडनक्रिया कुरु' इति । वरमिति प्रतिवचनेन वरस्तथा कुरुते। 'गडवडगुंडा आगत' इति वरमुखाद्वारंवारं श्रुत्वा वधूरप्यागतस्त्वा-गच्छत्वित्यनुज्ञा दत्ते पश्चाद्वधूवरौ संगच्छेते। सार्थं नाम 'गडवडगुंडेति' विधिना । तात्पर्यं ज्ञानेश्वर्या अनुवादकाना कार्यं न सुलभम्। ज्ञानेश्वरीसप्रदायपरपराप्राप्तज्ञानिन एवाऽनुवादकरणे समर्था नेतरे इति मतमस्माकम् ।

यद्यपि ज्ञानेश्वर्याः प्रचलितभाषानुवादकैर्महाराष्ट्रीया उपकृतास्तथापि तेषा कृतिर्महाराष्ट्रभाषानभिज्ञाना कनडतेलगुतामीलगुर्जरबगलादिभाषा-विदा नोपकारकरणे समर्था । प्रतिभाषाया ज्ञानेश्वर्या अनुवादकरणं स्वशक्यं । कोऽत्रोपायो येन सकलोपनिषत्सारभूता भगवद्गीताया गूढा-र्थप्रतिपादिका दृष्टातादिनानालंकारैः समलंकृता ज्ञानेश्वरी स्वकीयानां परकीयाना च जगतीतलवासिना नानाभाषाभिज्ञाना भगवद्गीतागूढार्थं दर्शयिष्यति मोक्षमार्गं चोपदेक्ष्यति । एक एवात्रोपायः संभवति गीर्वाणभाषया ज्ञानेश्वर्या अनुवादः कर्तव्यस्तेन स्वेपा परेपा चापि लाभः । अथ केचिद्वदिष्यन्ति गीर्वाणभाषा तावन्मृतेति कस्तर्हि तया भाषयाऽनुवादकरणेन लाभः ? । खलु गीर्वाणवाणी मृतेति ये मन्यंते तेषा जडाना प्रज्ञैव मृतेति सत्यम् । अहो यथा सुरलोकेऽमरेः सद्यामृतं पीत्वाऽमृतत्वं सपादित सा कथं मरिष्यति ? । यावद्वेदाः प्रवर्तंते तावद्विप्रमुखे सापि वरीवर्तत इति सिद्धातः ।

अथ ज्ञानेश्वर्या गीर्वाणभाषानुवादः सर्वेषा लाभप्रदो भवति तेषां परकार्यं धावति इति सत्यं किंतु तस्य करणे कः समर्थ. । परंतु

क्वात्र चिन्ता ? । भगवत्कृपया किमशक्यम् । मूकं करोति वाचालमीदृशी भगवच्छक्तिः । अहो भाग्येन मया सेश्वरीशक्तिरच प्रत्यक्षीकृता । जतपुरनिवासिना खासनीसोपाह्वेनानंतनाम्ना विष्णुशर्मतनुजनुषा न्यायाधीशपदसमलंकृतेन ज्ञानेश्वर्याः प्रतिपद्यं गीर्वाणमापया समलंकृतमिति दृष्टिपथमापतितम् । ईश्वरानुग्रहाद्विना नैतत्संभवति ।

अहो दशसहस्रसंख्याकसंस्कृतपद्यमयी रचना भगवत्कृपया विना कथं संपादयति पामरो मानवः । खलु भूषणमिदं खासनीसोपाह्वानामनंतशर्मणाम् । स्तुत्योऽयं प्रयत्नः । सफलेयं भगवत्सेवा । सदुपयोगोऽयं विद्यायाः । उचितोऽयं व्यवसाय इति मन्ये ।

दशसहस्रसंस्कृतपद्ययुता निर्मितापि ज्ञानेश्वरीयं द्रव्याभावेनैतावत्कालपर्यंतं मुद्रणसंस्कारेण न संस्कृता किंतु यथावत्स्वरूपा स्वस्थाने पेटिकायां स्थितेति दृश्यते ।

लेखकस्य सरलमतित्वमपि मुद्रणसंस्कारविलंबने कारणमभूत् । प्रसंगतया तस्य निदर्शनमपि नाप्रासंगिकम् । गीर्वाणज्ञानेश्वरीयं खासनीसमहोदयैः पुण्यपत्तनस्थ ओकोपाह्वमहादेवशर्मणः साहाय्येन मुद्रयितव्येति मनसि निधाय तैः सह समयः कृतः । तेन च संवत्सरपर्यंतमियं हस्तलिखिता ज्ञानेश्वरी ओकमहाशयानां हस्ते निरूढा । संशोधनवितरणमपि खासनीसमहोदयैर्दत्तं ओकमहाशयैरपि गृहीतम् । संवत्सरान्ते ओकमहोदयैरभिनवा स्वनिर्मिता षडध्यायपर्यंता संस्कृतपद्यमयी ज्ञानेश्वरी मुद्रिता । कृतसमया चेयं गीर्वाणज्ञानेश्वरी गृहीतेन वितरणेन सह तैः प्रेषिता स्वस्थाने । अस्य ग्रंथस्य मुद्रणसंस्कारस्य विलंबने इदं प्रधानं कारणम् । भवतु इयं गीर्वाणज्ञानेश्वरी नास्माभिः

साकल्येन विलोकिता परं तस्या यावान्भागो दृष्टिगोचरोऽभूत्तावता भागेनैवास्य ग्रंथस्य सुबोधत्वं, सरलत्वं, सरसत्वं, मूलपद्यार्थानुसारित्वं च दृष्ट्वा पंडितानामादरायायं ग्रंथोऽर्हतीति निःशंकं ब्रूमः । अस्य ग्रंथस्य सुबोधकत्वप्रदर्शनार्थं कानिचित्पद्यान्युदाहियन्ते ।

मूळ—तरी स्वाधिकाराचेनि मार्गें । आलें जें मानिलें आंगें ।
पतिव्रतेचेनि परिष्वंगें । प्रियातें जैसें ॥ अ. १८ ओ. ५८६

अनुवादः—स्वाधिकारेण संप्राप्तं यत्तत्कर्म प्रियं यथा ।
पतिव्रतापरिष्वंगः प्रियाय भवति प्रियः ॥

मूळ—सांवळ्या आंगा चंदन । प्रमदालोचनां अंजन ।
तैसें अधिकारासी मंडण । नित्यपणें जें ॥ अ. १८ ओ. ५८७

अनुवादः—चंदनं श्यामकाये वा प्रमदादृशि कज्जलम् ।
यथा तथाधिकारस्य नित्यं यन्मंडनं भवेत् ॥

मूळ—तें नित्यकर्म भलें । होय नैमित्तिकीं सावाइलें ।
सोनयासी जोडलें । सौरम्य जैसें ॥ अ. १८ ओ. ५८८

अनुवादः—तदेव नित्यं निर्दोषं साह्यं नैमित्तिकं पुनः ।
सुगंधयुक्तसौवर्णं समं बाभाति तत्तदा ॥

मूळ—आणी आंगा जीवाचि संपत्ती । वेंचूनि करी बाळाची पाळ्ती । परी जाते उबगणें हे स्थिती । न पाहे माय ॥
अ. १८ ओ. ५८९

अनुवादः—वित्तक्षयो जीवनाशः कायक्लेशो न गण्यते ।
माला सुतपने दृष्टा परं नोद्विजते कदा ॥

मूळ—समर्थाचिये पंक्तिभोजनें । तळिल्या वरिल्या एकचि पक्कान्नें ।
तेंवि श्रवणें अर्थे पठणें । मोक्षुचि लाभे ॥ अ. १८ ओ. ४८

हांजी संन्यासु आणि त्यागु । इयां दोहीं एक अर्थी लागु ।
जैसा संघातु आणि संघु । संघातेंचि बोलिजे ॥ अ. १८ ओ. ८७

अनुवादः—समं समर्थपंक्तिस्योच्चावचानां हि भोजनम् ।
तथा श्रवणार्थपठनैस्त्रिभिर्मोक्षः फलं समम् ॥

संन्यासश्च तथा त्यागो द्वावप्येकार्थवाचकौ ।
यथा संघश्च संघातः कोऽर्थभेदस्तयोः प्रभो ! ॥

भवतु । एतावंत्येव पद्यानि स्थालीपुलाकन्यायेन धीमतां वाचकानां चेतसि ग्रंथस्य सुबोधत्वे विश्वासमुत्पादयिष्यंतीत्याशास्ते—

विद्वद्वशंवदः

**विद्याभूषणस्तांबेशास्त्री ।**

श्रीज्ञानराजाय नमः

# श्रीगीर्वाणज्ञानेश्वरी

## द्वितीयो भागः

---

### सप्तमोऽध्यायः

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

अस्मिन्नध्याये करुणानिधिर्भगवान् यद्योगजन्यं ज्ञानं तदेव स्फुटीकुरुते विज्ञानमिति ज्ञेयम् ।

अनंतो भगवान्पार्थमुवाच श्रूयतामिति ।
इदानीं योगसंपन्नः संजातस्त्वमसि ध्रुवम् ॥ १ ॥
एवं वेत्सि समग्रं मां स्वहस्ततलरत्नवत् ।
विज्ञानसहितं ज्ञानं तेऽहं वक्ष्याम्यशेषतः ॥ २ ॥
विज्ञानेनात्र किं कार्यं मनसा मन्यसे यदि ।
प्रपंचाख्यं तदेवादौ ज्ञातव्यमिति मे मतम् ॥ ३ ॥
ततो ज्ञानोदये बुद्धि-स्तर्कश्चञ्चला अपि ।
भवंति कुंठिताः सम्यङ् नावलीरश्मिता इव ॥ ४ ॥
तथा न यत्राविशति मतिः स्याच्च पराङ्मुखी ।
विचारणा भवेत्तर्को नोत्कंठां यत्र धारयेत् ॥ ५ ॥
ज्ञानं तदेव जानीहि कौंतेयान्यत्प्रपंचकम् ।
विज्ञानाख्यं तदज्ञानं प्रपंचे सत्यधीस्तथा ॥ ६ ॥

संहरेत्सर्वमज्ञानं विज्ञानं चाखिलं दहेत् ।
ज्ञानं च स्वस्वरूपस्य केवलं चोद्धवेत्तदा ॥ ७ ॥
येन वक्तुर्निरुद्धा गीः श्रोतुश्च श्रवणं तथा ।
अयं स्थूलश्च सूक्ष्मोऽयं नेति भेदोऽवशिष्यते ॥ ८ ॥
एवं रहस्यं गूढं यत्करिष्ये तत्प्रकाशितम् ।
यतः स्वल्पेनापि येन पूर्णं स्यान्मनसेप्सितम् ॥ ९ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याणां सहस्रेषु ज्ञानेच्छुर्विरलो जनः ।
जिज्ञासुष्वपि कश्चिन्मां विरलो वेत्ति तत्त्वतः ॥ १० ॥
जनाकीर्णे त्रिभुवने शोधयित्वा स्थले स्थले ।
शूरांश्च लक्षशः सेनासंघं कुर्याद्यथोचितम् ॥ ११ ॥
रणे सहाच्छस्त्रघातान् शरीरे तेषु यो नरः ।
जयश्रीपीठ आरूढो होक एव स दैवभाक् ॥ १२ ॥
आस्थानया महापूरे विशन्ति नरकोटयः ।
कश्चित्तेषामात्मतीरं प्राप्नोति विरलः सुधीः ॥ १३ ॥
तस्मान्नैतद्धि सुलभं वक्तुं कष्टतरं महत् ।
यदस्ति तद्वदिष्येऽहमथ त्वं प्रस्तुतं शृणु ॥ १४ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

महत्तत्त्वादिकं सर्वं मन्मायामवधारय ।
यथा धनंजय छाया निजांगप्रतिबिंबिता ॥ १५ ॥
मायां तु प्रकृतिं विद्यान्द्विधा सा त्वष्टधा स्मृता ।
यया संपद्यते लोकत्रयमेतद्धिदांकुरु ॥ १६ ॥
कथं भिन्नाऽष्टधा माया यदीत्थं शंकसे हृदि ।
शृणु त्वं सावधानेन मदुक्तं व्याकृतं वचः ॥ १७ ॥

आपो भूमिर्मनो वायुरग्निः खं बुद्धिरेव च ।
अहंकारश्चेति भिन्ना स्मृता प्रकृतिरष्टधा ॥ १८ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

साम्यावस्था च याऽष्टानां पार्थ सा प्रकृतिर्मम ।
परमा जीवभूतेति नाम्ना चेयं व्यवस्थिता ॥ १९ ॥
सैषा जडाञ्जीवयति चैतन्यं चेतयत्यपि ।
मनसा मानयित्री च शोकमोहादिकस्य तु ॥ २० ॥
ज्ञानं हि यस्याः सान्निध्याद्बुद्धेरंगे प्रजायते ।
अहंकारस्य कौशल्याज्जगद्धारयते च या ॥ २१ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

प्रकृतिश्च यदा सूक्ष्मा स्थूलप्रकृतिमाश्रयेत् ।
तदैवोद्धाट्यते प्राणिटंकशाला सुविस्तृता ॥ २२ ॥
मूल्यत्वेन न भिद्यन्ते चतुर्धा जारजादयः ।
भेदास्त्वाकारमात्रेण स्वेच्छया ते प्रकीर्तिताः ॥ २३ ॥
कौतुकं पश्य भाण्डारं प्राणिमुद्राप्रपूरितम् ।
चतुरशीतिर्लक्षाणि भित्तिरन्या ह्यसंख्यकाः ॥ २४ ॥
पतन्ति सततं तस्मिन् जीवमुद्रा ह्यनेकदाः ।
समृद्धा लेखनं तासां प्रकृतिः कुरुते स्वयम् ॥ २५ ॥
उत्पादितानि भूतानि संस्कृतानि मुहुर्मुहुः ।
कर्माकर्मव्यवस्थायाः प्रवृत्तिं दर्शयत्यपि ॥ २६ ॥
अस्त्विदं रूपकं वच्मि स्पष्टं शृणु यथातथम् ।
करोति प्रकृतिस्तावद्विस्तारं नामरूपयोः ॥ २७ ॥
प्रकृतिः सा तु मय्येव मिथ्याभूता हि भासते ।
स्फुरतो जगतो मत्तो ह्यादिमध्यावसानकाः ॥ २८ ॥

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

इदं मृगजलं रश्मिरूपाकारेण भासते ।
तन्मूलान्वेषणे तच्च भानुरूपेण तिष्ठति ॥ २९ ॥
जानीहि प्रकृतेः सृष्टिं किरीटिंस्त्वं तथैव हि ।
कृते तदुपसंहारे तिष्ठाम्येको हि केवलम् ॥ ३० ॥
एवं दृष्टमदृष्टं च तन्मय्येव भवत्यहो ।
अहं च धारये विश्वं सूत्रं मणिगणानिव ॥ ३१ ॥
यथा सुवर्णमणयो हेमसूत्रेण गुम्फिताः ।
मयैव धार्यते तद्वत्सबाह्याभ्यन्तरं जगत् ॥ ३२ ॥

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥
पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

रसोऽस्मि तस्मादुदके स्पर्शश्च पवने तथा ।
अहमस्मीति जानीहि प्रकाशः शशिसूर्ययोः ॥ ३३ ॥
तथा नैसर्गिकः शुद्धः पृथिव्यां गन्ध एव च ।
शब्दश्च गगने चास्मि वेदेषु प्रणवस्तथा ॥ ३४ ॥
नरत्वं नृष्वहङ्कारोऽहंभावेषु तथैव च ।
पुरुषे पौरुषं यत्तु प्रोक्तं तदहमेव च ॥ ३५ ॥
मद्याम[1]कवचं तेजोरूपं धत्ते धनंजयः ।
तद्यापसार्य मद्रूपं पश्यसि त्वं धनंजय ॥ ३६ ॥
नानायोनिषु जातानि भूतानि विविधानि च ।
स्वस्वभक्ष्येण जीवन्ति वर्तन्ते भुवनत्रये ॥ ३७ ॥

---

१ अग्नि॰.

केचिद्वातभुजः केचित्सन्ति जीवास्तृणाशनाः ।
केचिदन्नेन जीवंति केचित्तु जलपानतः ॥ ३८ ॥
यदन्नं यस्य भूतस्य दृश्यते च पृथक् पृथक् ।
तत्तत्सर्वमहं विद्धि तत्रैक्यं तत्त्वतः स्फुटम् ॥ ३९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

अंकुरोऽक्षरबीजस्य वर्धते गगनोपमः ।
उत्पत्तिकाले व्याप्नोति प्रणवस्याक्षरत्रयम् ॥ ४० ॥
साकारं दृश्यते यावद्विश्वं तावत्तदाकृतिः ।
बीजं प्रलयकाले तु निराकारं गमिष्यति ॥ ४१ ॥
अनादि चैवं सहजं विश्वबीजमिदं महत् ।
इदं करतले तेऽद्य प्रददामीह केवलम् ॥ ४२ ॥
मदर्पितं यदा बीजं संपदयसि निवेकतः ।
तदा तस्योपयोगं हि सम्यग्ज्ञानासि पाण्डव ॥ ४३ ॥
किमन्यासक्तिकैर्वाक्यैरथ संक्षेपतो ब्रुवे ।
तपस्विषु तपो यत्तन्मद्रूपं विद्धि सात्विकम् ॥ ४४ ॥
गाढं बलं बलवतामहमस्मि तथैव च ।
बुद्धिर्बुद्धिमतामस्मि विद्धीत्थं त्वं धनंजय ॥ ४५ ॥
भूतेषु दृश्यते कामः सोऽहं कृष्णः सनातनः ।
येन धर्मः सुविपुलो भवेदर्थप्रदायकः ॥ ४६ ॥
विकारविस्तरात्काम इन्द्रियार्थान्ददाति सः ।
किन्त्विन्द्रियाणि गच्छेयुर्धर्मस्यैकपथा यथा ॥ ४७ ॥
निषेधस्य दुरध्वानं त्यक्त्वा विधिपथा चरेत् ।
तदा विधिप्रदीपोऽपि भवेत्तस्य पुरस्सरः ॥ ४८ ॥

काम एवंप्रकारेण वर्तते तेन धर्मभाक् ।
मोक्षतीर्थेन संसारान्मुक्तो भवति मानवः ॥ ४९ ॥
सृष्टिलतां वर्धयति स वेद-स्तुति-मण्डपे ।
मोक्षं स्पृशन्ति पर्णानि तस्याः कर्मफलानि च ॥ ५० ॥
नियताचारकंदर्पो भूतानां बीजरूपकः ।
स एव योगिनामस्मि विद्धि बीजप्रदः पिता ॥ ५१ ॥
किमेकैकविधानेन यस्तुजातं किलाखिलम् ।
मत्त एव समुत्पन्नं विश्वे विस्तारितं च यत् ॥ ५२ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

सात्त्विका राजसाश्चैव भावा ये तामसास्तथा ।
मत्त एव संभूतपन्नास्ते सर्वे विद्धि पाण्डव ॥ ५३ ॥
यदि ते मयि तिष्ठन्ति नाहं तिष्ठामि तेषु वै ।
मज्जेत्स्वमहदे सुप्तो जागृतो नैव मज्जति ॥ ५४ ॥
घनीभूतरसेनैव घटितः कणबीजकः ।
तस्माद्धवांकुरोत्पत्तिरंकुरात्काष्ठसंभवः ॥ ५५ ॥
बीजे काष्ठगुणाः सन्ति काष्ठे बीजगुणा न ते ।
तथा विकारा वर्तन्ते मयि वर्ते [redacted] तेष्वहम् ॥ ५६ ॥
गगनेऽभ्रसमुत्पत्तिर्नाभ्रे गगनसंभवः ।
अभ्रादुत्पद्यते वारि वारिण्यभ्रं न दृश्यते ॥ ५७ ॥
जलात्संजायते विद्युत्सर्वलोकप्रकाशिनी ।
जलवेगसमुत्पन्ना तस्यां किं वर्तन्ते जलम् ॥ ५८ ॥
धूमस्योत्पत्तिरनलात् किं धूमे पावको वसेत् ।
तथा यो मद्विकारः स नाहं यद्विकारवान् ॥ ५९ ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

जलोत्पन्नं हि शैवालं जलस्याच्छादकं भवेत् ।
नभोम्भांसि वाऽभ्राणि छादयन्ति नभस्तलम् ॥ ६० ॥
स्वप्नोऽलीकः किन्तु सुप्तस्तं सत्यत्वेन पश्यति ।
सुप्तोऽस्मीति स्मृतिरपि नैव स्मारयति क्वचित् ॥ ६१ ॥
अस्त्विदं चाथ दृष्टान्तः पटलं नेत्रसंभवम् ।
द्रष्टृत्वं नेत्रयोस्तच्च गिलत्येव न किं पुनः ॥ ६२ ॥
तथा त्रिगुणसंयुक्ता मच्छाया मयि बिम्बिता ।
सा छादयति मामेव यथा जवनिका तथा ॥ ६३ ॥
अतो भूतानि गच्छन्ति न मां मत्संभवान्यपि ।
जलत्वं न प्रपद्यन्ते यथा मुक्ता जलोद्भवाः ॥ ६४ ॥
घटो मृण्मय आमश्चेन्मृत्त्वं प्राप्नोति सत्वरम् ।
स पचानलसंयोगान्मृद्भिन्नो भवति स्वयम् ॥ ६५ ॥
ममैवांशो भूतजातमखिलं किं तु मायया ।
सर्वं जीवदशां प्राप निस्सङ्गं मां स्थितं यतः ॥ ६६ ॥
अतस्ते मदुपर्याप्ताः सन्तो जानन्ति मां न ते ।
अहंममधिया भ्रान्ता विषयान्धा यतः सदा ॥ ६७ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

महत्तत्त्वादिरूपेण या माया पार्थ वर्तते ।
कथं यास्यसि तां तीर्त्वा तद्रूपं शृणु सत्तम ॥ ६८ ॥

मायावर्णनम्—

इयं माया मद्रूपा महाचलसमुद्भवा ।
संकल्पाम्बु प्रपद्दती या महाभूतबुद्बुदा ॥ ६९ ॥
तत्रापः सृष्टिविस्तारो वेगः कालगतिस्तथा ।
तटे प्रवृत्तिनिवृत्त्योस्तुङ्गे पतति सान्तरे ॥ ७० ॥
गुणावर्त्तप्रवर्तेन मोहपूरसमाकुला ।
आहृत्य नगरं याति यमस्य नियमस्य च ॥ ७१ ॥

मत्सरभ्रमणैर्युक्ता द्वेषावर्तसमाकुला ।
प्रमादादिमहामीनसंपन्ना सा तरंगिणी ॥ ७२ ॥
कर्माकर्ममहापूरा प्रपंचधरणैर्युता ।
व्याप्ता बाधकरैराढ्या तटिनी सुखदुःखयोः ॥ ७३ ॥
द्वीपमत्र स्थितं कामवीचयस्ताडयन्ति वै ।
यत्रास्ति विपुलो जीवफेनो मायाभिधास्ति सा ॥ ७४ ॥
अहंकारौघसंजात-मदत्रय-तरंगिणी ।
तथा विषयवीचीनां कल्लोलैः सा समाकुला ॥ ७५ ॥
उदयस्य तथास्तस्य जन्ममृत्योः समुद्भवाः ।
उत्पद्यन्ते विलीयन्ते बुद्बुदाः पांचभौतिकाः ॥ ७६ ॥
संमोहविभ्रमौ मत्स्यावत्तो धैर्यामिषं हि तौ ।
अज्ञानवृहदावर्ता भ्रमन्ति भयदायकाः ॥ ७७ ॥
भ्रमपङ्कजले चैवमास्थापंके निमज्जिताः ।
रजोगुणस्य कल्लोलैः स्वर्गे गर्जन्ति पामराः ॥ ७८ ॥
तमोवारिवृहत्पाता दृढे सत्वे पतन्ति वै ।
यत्रेदृशी दुस्तरेयं मायानिर्झरिणी स्मृता ॥ ७९ ॥
पुनर्जन्मप्रवाहेण सत्यलोकस्थिता गडाः ।
आघाताद्ब्रह्मगडायन्ते ब्रह्माण्डस्था दृषद्गणाः ॥ ८० ॥
महावेगप्रवाहेऽस्या न कस्यापि पदं स्थितम् ।
दृष्टं नाद्यापि कस्तर्हि मायापूरं तरिष्यति ॥ ८१ ॥
ये कार्यास्तरणोपायास्ते हि गच्छन्त्यपायताम् ।
आश्चर्यं पश्य पार्थ त्वं शृणु चेदं वचो मम ॥ ८२ ॥
स्वयं बुद्धिबलेनैव गतानां नास्ति दर्शनम् ।
मज्जितास्ते ज्ञानगर्वाज्ज्ञानस्यैव ह्रदे बत ॥ ८३ ॥
वेदालाबुतरिस्था ये सर्वेऽहंभावमाश्रिताः ।
ते गता मदमीनस्य मुखे दैवहताः किल ॥ ८४ ॥
यौवनस्य बलेनैव धृत्वा मन्मथकच्छपम् ।

---

१ अत्र मूळे तमसः शीघ्रगामित्वं सत्वस्य मन्दत्वं ज्ञानेश्वरीटीप्पणीकारो मन्यते तदसाधु.

गच्छन्तो विषयैर्नक्रैश्चूर्णितास्तेऽल्पबुद्धयः ॥ ८५ ॥
वार्धक्याख्यतरंगेषु मतिभ्रंशस्य जालकम् ।
कवलीकुरुते शश्वत्पलितं तानितस्ततः ॥ ८६ ॥
दुःखाचलतटात्केचित्क्रोधावर्ते पतंति तान् ।
आपद्गृध्राश्चंचुघातैस्ताडयन्ति समुत्थितान् ॥ ८७ ॥
दुःखपंकेन लिप्तास्ते पश्चान्मरणवालुकाम् ।
विशन्त्येवं वृथा सर्वे गतास्ते कामकिंकराः ॥ ८८ ॥
यज्ञक्रियाख्यमंजूषां बध्वा स्वजठरे गताः ।
ते दिव्यसुखशैलस्य कन्दरे पतिताः स्वयम् ॥ ८९ ॥
कर्मबाहुषु विश्वस्तास्तत्तु मोक्षार्थिनोऽपतन् ।
अटन्ति मूढास्ते सर्वे मार्गे विधिनिषेधयोः ॥ ९० ॥
विवेककर्णधारेण रहिताः कुण्ठिता यदि ।
वैराग्यतरणिर्नैव कोऽत्र तारयितुं क्षमः ॥ ९१ ॥
तस्माद्दङ्घलेनैव मायागङ्गां तराम्यहम् ।
इति मूर्खाद्विना कोऽत्र वदेत्पार्थ विचारवान् ॥ ९२ ॥
पथ्येऽसति गदो नश्येत्साधुर्दुष्टमतिर्भवेत् ।
रागी भवेत्यक्तरागस्तर्हि मायानदीं तरेत् ॥ ९३ ॥
तस्कराय सभा रोचेत् किं वा मीनो गलं गिलेत् ।
भवेत्पिशाचोऽपि भीतस्तर्हि मायानदीं तरेत् ॥ ९४ ॥
मृगपोतो वागुरां वै छिन्द्यान्मेरुं च लंघयेत् ।
पिपीलिका तर्हि पश्येज्जीवो मायानदीतटम् ॥ ९५ ॥
अतः पार्थ जयेत्कांतां सकामो न यथा तथा ।
जीवोऽपि न तरेत्कश्चिदिमां मायामयीं नदीम् ॥ ९६ ॥
तथापि मां गतास्तीर्त्वा लीलया तान् शृणुष्व भोः ।
अनन्याश्चिन्तयन्तो मां दृढवैराग्यसंश्रिताः ॥ ९७ ॥
नाविकः सद्गुरुर्येषां तरिरात्मनिवेदनम् ।
ब्रह्मादिकृदष्टयष्टिं ते तीर्त्वा मायानदीं गताः ॥ ९८ ॥

---

१ अरित्रे–सुक्यम्

त्यक्त्वाहङ्कारभारं ते विकल्पपवनात्तथा ।
वारिप्रवाहात्संरक्ष्य तीर्त्वाऽगच्छन् विरागिणः ॥ ९९ ॥
आत्मबोधतरिर्येषामैक्यधीर्नाविकस्तथा ।
गता निवृत्तिकूलं ते सुखेनैव मनीषिणः ॥ १०० ॥
उपरत्याख्यबाहुभ्यां सोऽहंभावबलेन च ।
तरन्ति मायां गच्छन्ति मुक्तिमप्यपराजिताः ॥ १०१ ॥
मामेवमभजन्भक्तास्तीर्त्वा मायां गता हि ते ।
किन्त्वेवं विरला दृष्टा मद्भक्तेषु धनंजय ॥ १०२ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥
चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६

अहङ्कारपिशाचेन ग्रस्ता जीवा अनेकशः ।
गतास्त आत्मबोधस्य सर्वथैवातिविस्मृतिम् ॥ १०३ ॥
तदा नियमवस्त्रं ते विस्मृत्याधोगतित्रपाम् ।
त्यक्त्वा वेदोक्तकर्माणि नैव कुर्वन्ति निस्त्रपाः ॥ १०४ ॥
यदर्थमागता देहग्रामं तान्पदय पाण्डव ।
तत्सर्वं विस्मृताः सर्वे भूत्वोन्मत्ता भवन्ति च ॥ १०५ ॥
इन्द्रियग्राममार्गेषु षड्विकारसमन्विताः ।
अहंममेति जल्पन्तो नृत्यन्ति च गतत्रपाः ॥ १०६ ॥
आधिव्याधिकशाघाताच्च स्मरन्त्यविवेकिनः ।
किमत्र कारणं मायाप्रासादन्यच्च चास्ति भोः ॥ १०७ ॥
ते नाप्नुवन्ति तस्मान्मां भजन्त्यन्ये चतुर्विधाः ।
यैरेवात्महितं सम्यक्कृतं संवर्धितं[1] च तत् ॥ १०८ ॥
तेषां वै प्रथमश्चार्तो जिज्ञासुस्तु द्वितीयकः ।
अर्थार्थी च तृतीयः स्याज्ज्ञानी स्याच्च चतुर्थकः ॥ १०९ ॥

---

1 टिप्पणीमनुलक्ष्य 'संवर्धकं' इत्यपि युज्येत.

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

तत्रार्तो ह्यार्तिनाशाय जिज्ञासुर्ज्ञानहेतुना ।
अर्थार्थी धनलाभाय भजन्ते मां सहेतुकाः ॥ ११० ॥
चतुर्थोऽहैतुको ज्ञानी भजते मामनन्यभाक् ।
अतएव स मद्भक्त एक एव ब्रवीमि ते ॥ १११ ॥
ज्ञानी ज्ञानप्रकाशेन भेदाभेदतमो हरेत् ।
पश्चान्मद्रूपतां गच्छेद्विभक्तो न भवेत्कदा ॥ ११२ ॥
स्फटिकेषु जलाभासस्तथैवान्येषु भासते ।
सामरस्यं तथा ज्ञानी नास्त्यालोचय कौतुकम् ॥ ११३ ॥
गगनेऽपि स्थितो वातो वातत्वं नैव मुञ्चति ।
तथा मद्रूपभक्तोऽपि भक्तत्वं नैव मुञ्चति ॥ ११४ ॥
चालितस्तालवृन्तेन वायुर्भिन्नो नभादिति ।
भाति शान्ते स्थिते वाते नभ एव यथा तथा ॥ ११५ ॥
शारीरकर्मभिर्लोकैर्भक्त इत्यवगम्यते ।
अन्तःप्रतीतिधर्मेण सोऽहंरूपोऽस्ति केवलम् ॥ ११६ ॥
आत्माहमहमेवात्मेत्युदिते ज्ञानभास्करे ।
इति जानात्यतो ह्यर्पात्तं जाने सोऽहमेव च ॥ ११७ ॥
जीवात्परं हृदात्मानं ज्ञात्वा यो वर्तते सदा ।
स कथं देहभेदेन मत्तो भिन्नत्वमाप्नुयात् ॥ ११८ ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

ये सकामास्तेऽपि भक्ता मत्प्रिया एव सर्वदा ।
परं मदीयोऽयमिति प्रीत्याऽहं ज्ञानिनं ब्रुवे ॥ ११९ ॥
पयसेदं दुग्धकामो हि पाशबद्धां करोति गाम् ।
विना रज्जुं सैव वत्सं क्षीरं पाययति स्वयम् ॥ १२० ॥
न्यायेन भरतस प्राणैर्नात्यत्समस्तु परं कश्चित् ।

सर्वत्र मातृभावो हि धेनौ वत्सस्य दृश्यते॥ १२१ ॥
अतोऽनन्यां चिन्तयन्तं वत्सं प्रीतिकरा भवेत्।
धेनुस्तथैव मत्प्रीतिर्ज्ञानिन्याह रमापतिः ॥ १२२ ॥
पुरा ये कथिता भक्तास्तेऽपि मान्या धनंजय।
किं तु मान्यतरस्तेभ्यो ज्ञानी तत्कारणं शृणु ॥ १२३ ॥
ज्ञानोदये समुद्भूते संसारं विसरत्यसौ।
यथा समुद्रमाप्त्वा सरित्पश्चान्न गच्छति ॥ १२४ ॥
आत्मप्रतीतिराख्यातरा गङ्गांतःकरणोद्भवा।
मामेव सागरं प्राप्ता यस्य सोऽहं ब्रुवे किमु ॥ १२५ ॥
एवं हि विश्रुतो ज्ञानी चैतन्यं मम केवलम्।
न वक्तव्यमिदं किन्तु प्रसङ्गादुदितं मया ॥ १२६ ॥

बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

कामादिव्यालसंयुक्तात्सान्द्राद्विषयकाननात्।
आगतः स बहिर्भूमिं स्थितः सद्वासनामयीम् ॥ १२७ ॥
ततो दुष्कर्मपन्थानं कुटिलं सत्समागमैः।
त्यक्त्वा वीर स सत्कर्मपंथानं सरलं व्रजेत् ॥ १२८ ॥
एवं जन्मशतं भक्तिमार्गेण प्रचरन्नसौ।
पादत्राणं विनाऽऽशायाः पान्थः किं गणयेत्फलम् ॥ १२९ ॥
गच्छन् शारीरिकेऽज्ञाने निशि यो निरुपाधिकः।
तस्य कर्मक्षयो भूत्वा ज्ञानदीप्त्या भवत्युषः ॥ १३० ॥
तस्मिन् गुरुकृपारूपे प्रभाते ज्ञानरश्मयः।
पतन्ति कोमलाः पश्चात्साम्यर्द्धेर्दर्शनं भवेत् ॥ १३१ ॥
साम्यदृष्ट्या युतो यत्र यत्र गन्तुं स चेच्छति।
तत्र तत्रैव मां पश्येत्स्वस्थे सत्यपि तत्तथा ॥ १३२ ॥
जलमग्ने घटे तस्य जलमन्तर्बहिर्यथा।
तथैव मद्विना नान्यत्तस्य किञ्चिद्धि वर्तते ॥ १३३ ॥
स तथैव ममांतस्थस्तस्य चान्तर्बहिस्त्वहम्।

न शक्यं वचसा वक्तुमवाच्यत्वाद्यथार्थतः ॥ १३४ ॥
अतो ब्रवीम्यहं तेन ज्ञानागारं स पश्यति ।
तथैव चरतस्तस्य विश्वं भाति स्वमात्मकम् ॥ १३५ ॥
समस्तं वासुदेवेति मनस्येषा च भावना ।
एवं प्रतीतियुक्तस्तु ज्ञानी भक्ततमो मतः ॥ १३६ ॥
यस्य स्वानुभवागारे ग्रस्तं स्याच्च चराचरम् ।
धनुर्धर भवत्येवं स महात्मा सुदुर्लभः ॥ १३७ ॥
किरीटिन्यद्दृवश्चात्र भजन्ते भोगहेतुतः ।
आशातिमिरदृष्ट्या च विषयान्धा भवन्ति हि ॥ १३८ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

फलाशा यस्य हृदये चास्ते कामस्य संचरः ।
तयोरेव हि संसर्गाज्ज्ञानदीपः प्रणश्यति ॥ १३९ ॥
एवमन्तर्बहिश्चान्धा न मां पश्यन्ति पाण्डव ।
समीपस्थमपि त्यक्त्वा भजन्त्यन्यतरं च ते ॥ १४० ॥
आदौ प्रकृत्या ह्यवशा भोगैर्दीनास्ततः कृताः ।
तल्लोलुपाश्च ते सर्वे भजन्ति पश्य कौतुकम् ॥ १४१ ॥
तेषां नियमबुद्धिः का कथं वा ह्युपचारकाः ।
किंवा विहितकृत्यस्य ह्यर्पणं किं यथाविधि ॥ १४२ ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

योऽप्यन्यदेवताभक्तो भजते देवतान्तरम् ।
तथा तद्भजकानां वै कामपूरयितास्म्यहम् ॥ १४३ ॥
देवो देव्यप्यहमिति ते विस्मृत्याऽविवेकिनः ।
तत्र तत्र पृथग्भावं धारयन्त्येव ते तथा ॥ १४४ ॥

---

१ कुर्वीत इति ह्येयं.

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥

तया च श्रद्धया युक्तास्तदाराधनतत्पराः ।
उचितं कर्म कुर्वन्ति सिद्धिप्राप्त्यवधौ हि ते ॥ १४५ ॥
एवं यद्यद्भावयन्ति फलं तत्तल्लभन्ति ते ।
किन्तु तत्सकलं मत्तो विद्धि प्राप्नोति निश्चितम् ॥ १४६ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

आशापाशाच्च मुञ्चंति न मां जानन्ति पामराः ।
आशाबद्धा अंतवच्च फलमेव लभन्ति ते ॥ १४७ ॥
बहुनात्र किमुक्तेन तद्धि संसारसाधनम् ।
भजनं फलभोगश्च क्षणिकं स्वप्नवद्भवेत् ॥ १४८ ॥
इदमस्तु ममाभीष्टं यजते यो हि देवताम् ।
तद्देवतां समापन्नो भवेद्वै तदुपासकः ॥ १४९ ॥
एवं तनुमनःप्राणैर्ये मन्मार्गानुसारिणः ।
ते हि देहस्य निर्वाणे मद्रूपाश्च भवंति हि ॥ १५० ॥

अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धयः ।
परं भावमजानंतो ममाव्ययमनुत्तमम् ॥ २४ ॥

अकुर्वाणा निजहितं ते निमज्जंति मानवाः ।
स्वल्पेपि सहसा मूढाः करस्थितजले यथा ॥ १५१ ॥
सुधासिंधुनिमग्नस्य किमर्थं मुखमीलनम् ।
किमर्थं पूतिगंधस्य चिंतनं पल्वलोदकम् ॥ १५२ ॥
सुधामग्नस्य मरणं युक्तं किं स्याद्धनंजय ।
भूत्वा सुधामयस्तत्र वासोऽयुक्तो भवेत्किमु ॥ १५३ ॥
फलाशापंजरं त्यक्त्वा स्वामी स्याच्च चिदंबरे ।
प्रतीतिरूपपक्षाभ्यां किं न युक्तं धनुर्धर ॥ १५४ ॥

यन्नोन्नतिप्रभावेण सुखवृद्धिर्भवेत्सदा ।
स्वेच्छया सुखसंचारो यत्र कुत्र भविष्यति ॥ १५५ ॥
किमर्थमुपमाशून्ये मापनं वा निराकृतौ ।
आकारभावनाऽव्यक्ते युक्ता किं व्यक्तभावना ॥ १५६ ॥
किंत्वेते नहि रोचंते शब्दाः कल्याणदायकाः ।
तेभ्यो नरेभ्यो जानीहि पार्थ ये सिद्धिसेचकाः ॥ १५७ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

योगमायाख्यपटलाद्धाः समभवन्खलु ।
तस्माद्देहपटलेनैव न मां पश्यंति ते कदा ॥ १५८ ॥
मायां विना वस्तुजातं यत्र कुत्रापि नास्ति वै ।
यथा क्षारजलाद्भिन्नं लवणं नास्ति तत्तथा ॥ १५९ ॥
न वायुः स्पर्शते कं वाऽवकाशो व्याप्नुते न किम् ।
अस्त्विदं चैक एवाहमस्मि विश्वं समग्रकम् ॥ १६० ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

अतीतान्यत्र भूतानि मन्मयान्येव तानि च ।
वर्तमानानि सर्वाणि तान्यप्यस्म्यहमेव च ॥ १६१ ॥
भविष्याणि च भूतानि मत्तः परतराणि न ।
वस्तुतो न भवेत्किंचिच्छब्दानां क्रीडनं हि तत् ॥ १६२ ॥
यथा रज्जुमये सर्पे कृष्णवर्णादिकल्पना ।
तथा भूतेषु मिथ्यात्वात्कल्पनापि निरर्थका ॥ १६३ ॥
एवं सर्वत्रनुस्यूते मयि भूतेषु पाण्डव ।
संसारश्चैव भूतानां तस्यान्यत्कारणं भवेत् ॥ १६४ ॥
यत्किंचिद्विषये तस्मिन्कथ्यते श्रूयतामिदम् ।
देहस्य चाहंकारस्य सत्यत्वं दृढतां गतम् ॥ १६५ ॥

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥

तत्सङ्गात्कन्यका जाता येच्छानाम्नी सुकामिनी ।
साऽवृणोत्तरुणी द्वेषं स्वयं कामविमोहिता ॥ १६६ ॥
सुखदुःखयमौ पुत्रौ द्वंद्वमोहावसूत सा ।
ह्लादेन चाऽवर्धयत्तावहंकारपितामहः ॥ १६७ ॥
यमलौ धृतिहीनौ तावेंद्रियाणां च विग्रहे ।
अशक्तौ तौ तुंदिलत्वमिच्छादुग्धेन गच्छतः ॥ १६८ ॥
असंतोषाख्यमदिरामत्तौ भूत्वा धनुर्धर ।
सक्तौ विषयगर्तेषु विश्रांतिं नैव गच्छति ॥ १६९ ॥
भावशुद्धिसुमार्गेषु विकल्पाख्यस्तु कंटकान् ।
प्रसार्य पश्चात्सुमार्गानन्विष्यति धनंजय ॥ १७० ॥
ततो भ्रांतानि भूतानि संसाराख्याटवीमगुः ।
महादुःखप्रहारांश्च सहंते तानि नित्यशः ॥ १७१ ॥

येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ २८ ॥

एवं दृष्ट्वा विकल्पाख्यान्निष्फलांस्तीव्रकंटकान् ।
न गृह्णंति विकल्पं तं स्वमतिभ्रमकारकम् ॥ १७२ ॥
एकनिष्ठापदाघातैर्ये विकल्पाख्यकंटकान् ।
चूर्णीकुर्वंति ते मुक्ताः पापारण्याद्भवंति वै ॥ १७३ ॥
ततस्ते पुण्यमार्गेण मामागच्छंति सत्वरम् ।
कामादिपिशुनास्तेषां मार्गादपसरंति च ॥ १७४ ॥

जरामरणमोक्षाय मामाश्रित्य यतंति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

भवेद्धि कुंठिता येन जन्ममृत्युपरंपरा ।
रतिरेवंविधे यत्ने येषां समुपजायते ॥ १७५ ॥

यत्नः कालेन फलदो भवेद्ब्रह्मप्रदायकः ।
यथा पक्वफलं कालाद्रसपूर्णं भविष्यति ॥ १७६ ॥
तदाऽध्यात्मविपाकेन कृतकृत्यो भविष्यति ।
अलं हि कर्मणां कामो विरामो मनसस्तथा ॥ १७७ ॥
एवमध्यात्मलाभो हि भवेत्तस्य धनंजय ।
विधिश्च केवलं तावदहं तस्य समुद्यमे ॥ १७८ ॥
साम्यस्य वर्धनादैक्यसंपत्तस्य निवर्धते ।
तेन भेदात्स्यदैन्यस्य स्मृतिरेव न विद्यते ॥ १७९ ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

येऽस्पृशन्साधिभूतं मां साकारमधिदैवतम् ।
धृत्वा प्रतीतिहस्तेन ते धन्या भुवि मानवाः ॥ १८० ॥
अधियज्ञोऽहमेवेति दृष्ट्वा ये सततं विदुः ।
वियोगे ते तु देहस्य दुःखहीना भवन्त्युत ॥ १८१ ॥
आयुःसूत्रस्यांतकाले भूतानां भोगसंक्षयम् ।
दृष्ट्वा को न भवेत्खिन्नो युगांतं तं वदेच्च कः ॥ १८२ ॥
हृदीभूता ममांगे ये कति सन्ति न वर्ण्यते ।
प्राणप्रयाणकालेऽपि त्यजंति न च मां हि ते ॥ १८३ ॥
अनर्घ्यं तदिदं विद्धि सन्ति ये निपुणा मयि ।
युक्तांतःकरणास्ते च योगिनः कीर्तिता इति ॥ १८४ ॥
तदैव शब्दकुपिता सावधानांजलिस्तया ।
अर्जुनस्य तदा चित्तमन्यंचासीत्पराङ्क्स्थितम् ॥ १८५ ॥
ब्रह्मवाक्यफलान्यत्र नानार्थरसवंति च ।
भावपरिमलाढ्यानि सर्वतः प्रसृतान्यलम् ॥ १८६ ॥
मंदानिलः कृपारूपः सहजः कृष्णवृक्षतः ।
वचनाख्यफलं नीत्वा ह्यर्जुनश्रवणेऽर्पितम् ॥ १८७ ॥
फलानि तानि वेदांतमयानि ब्रह्मसागरात् ।

---

१ पूर्वप्रतिपादितश्लोकस्यार्थे विशतार्थानिति च ज्ञेयम्

उद्धृत्य परमानंदसितायुक्तकृतानि वै ॥ १८८ ॥
मधुराणां निर्मलानां फलानां रसकांक्षया ।
पार्थो विस्मयपीयूषपानेऽभूदतितत्परः ॥ १८९ ॥
सुखसंप्लुतस्तेन स्वर्गोयं सुखमल्पकम् ।
नगद्गदः समुल्लासात्कल्पितं हृदयांतरे ॥ १९० ॥
एवं वाह्यांगसंगेन सुखं विस्तरतामगात् ।
तदा रसस्वादनार्थं जिह्वा सोत्कंठिताऽभवत् ॥ १९१ ॥
अनुमानकराग्रेण धृत्वा वाक्यफलानि च ।
स प्रतीतिमुखस्यांतः सन्नियोक्तुमकल्पयत् ॥ १९२ ॥
विचाररसनाऽभक्ष्यान् हेतुदंतैरचूर्णितान् ।
इति जानन्सुभद्रायाः पतिस्तान्नैव चुंबति ॥ १९३ ॥
पश्चात्स चकितः प्राह जले तारागणा इव ।
अक्षराणां च सौंदर्याद्वंचितोऽस्मि कथं त्विति ॥ १९४ ॥
एतत्पदं न सत्यं हि गगनस्थं यथाक्षरम् ।
मज्जनोन्मज्जने तत्र व्यर्थ एव परिश्रमः ॥ १९५ ॥
यद्यहं ग्रहणेऽशक्तस्तेषामास्वादनं कुतः ।
इति विस्मयमापन्नः पार्थः कृष्णं व्यलोकयत् ॥ १९६ ॥
एवं विनयसंयुक्तः सुभटो देवमब्रवीत् ।
चित्रं सत्यपदास्वादो न कथं सेवितो नरैः ॥ १९७ ॥
नानाप्रमेयतात्पर्यमवधानं विना कथम् ।
केवलं श्रवणादेव तद्वाणीगोचरं भवेत् ॥ १९८ ॥
नैव साधारणं वाक्यमस्ति विस्मयकारकम् ।
दृष्ट्वा तस्याक्षरं चैव विस्मयो विस्मितो भवेत् ॥ १९९ ॥
कर्णद्वारगवाक्षेण तव भाषणरश्मयः ।
विशंति यावत्तावन्मे निरुद्धं मन एव हि ॥ २०० ॥
तदर्थं ज्ञातुमिच्छामि कालोऽतीतो हि भाषणे ।
न सहे देव तस्मात्त्वं सत्वरं कथय स्वयम् ॥ २०१ ॥
धृत्वा पूर्वप्रत्ययं च पराभिप्रायमेव च ।
तन्मध्ये पृष्टवान्पार्थोऽदर्शयन्स्वात्मकामनाम् ॥ २०२ ॥

प्रश्नस्य कीदृशी रीतिर्न सीमोल्लंघनं कृतम् ।
कृष्णस्य हृदये प्रीतिः परिष्वंगोत्सुकाऽभवत् ॥ २०३ ॥
प्रष्टव्यो विनयेनैव गुरुः शिष्येण धीमता ।
पार्थ एव विजानाति शिष्यधर्मस्थितो हि सः ॥ २०४ ॥
इदानीं प्रश्नकरणं सर्वज्ञश्रीहरेर्वचः ।
एतत्सर्वं संजयश्च प्रेम्णैव कथयिष्यति ॥ २०५ ॥

इतः मराठीभाषाप्रशस्तिः

भाषा यदि प्राकृता स्यात्तर्हि सा सरलास्ति वै ।
शाकाऽर्थग्रहणे दृष्टिर्भवेत्कर्णस्य का कथा ॥ २०६ ॥
यदि नास्वादितो ह्यर्थः सरसो बुद्धिजिह्वया ।
तथाप्यक्षरसौंदर्यं स्थगयत्येव निश्चितम् ॥ २०७ ॥
मालतीकलिकागंधो घ्राणे परिमलप्रदः ।
तथापि बाह्यसौंदर्यं न किं नेत्रसुखप्रदम् ॥ २०८ ॥
सौंदर्याद्देशभाषाया इंद्रियाणि नृपोचितान् ।
भुक्त्वा भोगान् गमिष्यंति सिद्धांतनगरं ततः ॥ २०९ ॥
श्रोतव्यं भाषणं तच्च येनालं भाषणं भवेत् ।
निवृत्तिदासः प्रोवाच ज्ञानदेव इति स्वयम् ॥ २१० ॥

इति श्रीज्ञानेश्वरविरचितायां भावार्थदीपिकायां अनंतनिरूपणे
सप्तमोऽध्यायः ॥ ७ ॥

# गीर्वाणज्ञानेश्वरी

## अष्टमोऽध्यायः

अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अनुवादः

ततोऽर्जुनोऽब्रवीदेवमवधारय मद्वचः ।
यन्मया पृच्छयते तच्च विस्तरेण निरूप्यताम् ॥ १ ॥
तद्ब्रह्म कीदृशं प्रोक्तं कर्म किंनामकं तथा ।
अथ चाध्यात्म किं प्रोक्तमिहलोके च केशव ॥ २ ॥
अधिभूतं किमु प्रोक्तं किमत्रास्त्यधिदैवतम् ।
जानामि च यथा सम्यक् तथा मां त्वं निवेदय ॥ ३ ॥

अर्जुन उवाच

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

अधियज्ञश्च कः प्रोक्तो देहेऽस्मिन्वर्तते कथम् ।
नचैतदनुमानेन भूतानां दृष्टिगोचरम् ॥ ४ ॥
जितान्तःकरणैर्देहप्रयाणे च नृभिस्तथा ।
त्वं ज्ञेयोऽसि कथं देव शार्ङ्गपाणिन्वदस्व मे ॥ ५ ॥
दिव्यचिंतामणिगृहे यदि शेते स दैववान् ।
स्वप्नेऽपि जल्पितं तस्य नहि व्यर्थं भविष्यति ॥ ६ ॥
तथैवार्जुनवाक्यं तु श्रुत्वा देवोऽब्रवीत्तदा ।
पार्थाऽवधारय क्षिप्रं यश्च प्रश्नस्त्वया कृतः ॥ ७ ॥

यद्धः कल्पतरोर्मूले कामधेनोर्हि वत्सकः ।
पार्थश्चेदत्र किं चित्रं काङ्क्षितं सिद्धिमाप्नुयात् ॥ ८ ॥
कृष्णः क्रोधेन यं हन्ति स याति ब्रह्मतां पराम् ।
कृपयोपदिशेत्तर्हि स कथं ब्रह्म नाप्नुयात् ॥ ९ ॥
स्वयं कृष्णमये जाते कृष्णश्चांतर्भवेत्स्वयम् ।
तस्यांगणे कल्पिताश्च सिद्धयः सन्ति संयुताः ॥ १० ॥
एवं हि यत्परं प्रेम निःसीमं विजयेऽस्ति वै ।
तस्मात्तस्यैव कामस्तु सफलः सर्वशो भवेत् ॥ ११ ॥
ज्ञात्वेति तत्पुरः पार्थः पृच्छति स मनोगतम् ।
सुधाप्रपूरितं पात्रं स्थापयामास माधवः ॥ १२ ॥
स्तन्योत्सुकं यदापत्यं मातैवावैत्ति तत्त्वतः ।
किं तत् शब्देन तां वक्ति यदा स्तन्यं ददाति सा ॥ १३ ॥
तस्मात्कृपालुता शिष्ये गुरोश्चित्रं न तत्र हि ।
अस्त्विदं श्रूयतां सर्वं यद्देवः प्रत्यभाषत ॥ १४ ॥

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

ततः सर्वेश्वरः प्राह देहे छिद्रमये च यत् ।
ओतमोतं स्थितमपि न नश्यति कदाचन ॥ १५ ॥
प्रष्टव्यं यदि तत्सूक्ष्मं तर्हि शून्यसमं भवेत् ।
स्वभावेन न शून्यं तत्सूक्ष्मत्वाद्गगनाञ्चलेत् ॥ १६ ॥
विज्ञानपेशिकाया यत्र पतत्येव चालितम् ।
यदेवं विरलं चास्ति परब्रह्म हि तत्स्मृतम् ॥ १७ ॥
नैव जानाति तद्धर्मं साकारं जन्मनामपि ।
आकारलोपे जातेऽपि लीयते न कदापि हि ॥ १८ ॥
यद्ब्रह्मनित्यता चास्ति सहजैवं स्थितिः सतः ।
सुभद्रायाः पते नाम नूनमध्यात्मसंज्ञकम् ॥ १९ ॥
निर्मले गगने चापि न जाने सहसा कथम् ।

उद्भवन्ति घनाश्चैव नानावर्णयुता यथा ॥ २० ॥
तथा ह्यमूर्तरूपेऽस्मिन्विशुद्धे महदादिकाः ।
अहंकारादिकैर्मेदैराकारान्धारयन्ति ते ॥ २१ ॥
निर्विकल्पसमक्षेत्रे सत्संकल्पांकुरोद्भवः ।
तस्माद्भवंति विपुलाः शिला ब्रह्माण्डगोलकाः ॥ २२ ॥
ब्रह्मबीजमयाः सर्वे दृश्यन्ते रूपधारिणः ।
तत्रस्थजीवसंघस्येयत्ता कर्तुं न शक्यते ॥ २३ ॥
ब्रह्मांडगोलकस्यांशाश्चोद्भवन्ति ह्यनेकशः ।
समर्था ह्यादिसंकल्पाः कुर्वन्ति सृष्टिवर्धनम् ॥ २४ ॥
ब्रह्मणोऽन्यन्नैव यस्तु यत्र कुत्रापि दृश्यते ।
अनेकत्वेन तत्पूरसदृशं प्रतिभासते ॥ २५ ॥
साम्याद्वैषम्यतो वापि संभवन्ति चराचराः ।
भिन्नप्रसवयोनीनां दृश्यन्ते लक्षशः पृथक् ॥ २६ ॥
मर्यादा क्षुद्रजीवानां नास्ति किंतु विचारतः ।
सर्वेषां कारणं माया नान्यत्किमपि दृश्यते ॥ २७ ॥
ततोऽदृश्यं कर्ममूलं चांते नास्त्येव कारणम् ।
कारणेन विना कार्यं वृद्धिमायाति केवलम् ॥ २८ ॥
एवं कर्तुर्विनाऽव्यक्ते ह्याकारो दृष्टिगोचरः ।
व्यापारो जायते यस्मात्स भवेत्कर्मसंज्ञकः ॥ २९ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अधिभूतं च यत्प्रोक्तं तत्संक्षेपाद्वदामि ते ।
यद्वदभ्रं समुत्पन्नं लयमायाति नित्यशः ॥ ३० ॥
अस्तित्वं च तथा भाति क्षणमात्रेण नश्यति ।
पंचीकृतानि भूतानि जनयंति समेत्य च ॥ ३१ ॥
भूतानामाश्रयेणास्ते भूतसंगेन भासते ।
तल्लये भ्रंशते यच्च नामरूपात्मकं त्विदम् ॥ ३२ ॥

अधिभूतमिति प्रोक्तं जीवं वेदाऽधिदैवतम् ।
भुंक्ते भोगान्प्रकृतिजान्स विद्यात्समुपार्जितः ॥ ३३ ॥
यश्चक्षुश्चेतनायाश्चाध्यक्षश्चेन्द्रियदेशके ।
संकल्पाख्यविहंगस्य देहांते वृक्षरूपकः ॥ ३४ ॥
यश्चान्यः परमात्मैव युतोऽहंकारनिद्रया ।
तस्मात्स्वप्नस्थवत्तोपः खेदो वा तस्य जायते ॥ ३५ ॥
यत्तु जीवेतिनाम्नैव स्वभावेनोदितं भुवि ।
पंचायतनमुख्यं च तत्प्राहुरधिदैवतम् ॥ ३६ ॥
अतः शरीरग्रामे यः शारीरोपाधिशामकः ।
सोऽधियज्ञ इति प्रोक्तस्तं मां विद्धि धनंजय ॥ ३७ ॥
अधिदैवाधिभूताख्यं समस्तमहमेव हि ।
उत्तमं हेम संसर्गाच्छयामिकां लभते न किम् ॥ ३८ ॥
नो जहात्युत्तमत्वं तच्च याति श्यामिकामपि ।
यावच्च तस्य संयोगो हीनत्वं तावदस्ति वै ॥ ३९ ॥
तथैव ह्यधिभूतादि त्वविद्यापल्लवैः किल ।
यावत्प्रच्छादितं तावत्पृथग्भासो भवेत्सदा ॥ ४० ॥
नष्टे ह्यविद्यापटले भेदभावो न विद्यते ।
ऐक्यं कथं विना द्वैताद्भवत्यत्र धनंजय ॥ ४१ ॥
केशोपरि स्थापितस्य स्फटिकस्य शिलातलम् ।
चक्षुषा शतशो भिन्नं दृश्यते तत्पुनर्यदि ॥ ४२ ॥
दूरीकृतेषु केशेषु भिन्नत्वं कुत्र वा गतम् ।
केनचित्साधितं स्यात्किं वद संधिरसादिभिः ॥ ४३ ॥
अखंडमेव तत्किंतु संगाद्भेदत्वमागतम् ।
तत्संगे तु परावृत्ते पूर्ववत्स्याद्यथास्थितम् ॥ ४४ ॥
तथाऽहंभावनाशे तदैक्यमस्त्येव मूलतः ।
तदेव पश्य सत्यं हि सोऽधियज्ञः स चास्म्यहम् ॥ ४५ ॥
पश्य ब्रूमो वयं तुभ्यं यज्ञः कर्मसमुद्भवः ।
इत्येवं कथितं सोऽयमधियज्ञोऽस्ति पांडव ॥ ४६ ॥

सोऽयं सकलजीवानां विश्रामः सुखशेवधिः ।
कथयामि स्वरूपं तद्विशदीकृत्य पांडव ॥ ४७ ॥
वैराग्येंधनपूर्णेऽथ प्रदीप्ते चेंद्रियानले ।
विषयाख्यद्रव्यरूपामाहुतिं च ददत्यहो ॥ ४८ ॥
यज्ञासनाख्यभूमिं तु संशोध्याधारमुद्रया ।
शरीरमंडपे कुर्याद्वेदिकारचनामथ ॥ ४९ ॥
संयमाख्याग्निकुंडेषु द्रव्याण्यपीन्द्रियाणि तु ।
योगमंत्रसमुद्घोषैर्यजंते च निरंतरम् ॥ ५० ॥
संयमः प्राणमनसां ततो हवनसंपदः ।
ज्ञानानलं तोषयंति निर्धूमं संभ्रमात्ततः ॥ ५१ ॥
एवं हि सकलं यज्ञे ह्यर्पयेद्विषयादिकम् ।
ज्ञाने ज्ञेयत्वमापन्ने शेषं ब्रह्मैव तिष्ठति ॥ ५२ ॥
नाम चास्याधियज्ञाख्यं सर्वज्ञो ह्युक्तवान्यदा ।
तदार्जुनोऽप्यतिप्राज्ञः प्रास्त्यमगमत्ततः ॥ ५३ ॥
एवं ज्ञात्वाऽप्रवीद्देवस्त्वया सम्यगिदं श्रुतम् ।
इति कृष्णवचः श्रुत्वा पार्थोऽभृद्धर्षितस्तदा ॥ ५४ ॥
बालके तृप्तिमापन्ने तन्माता तृप्यते यथा ।
शिष्यस्य लौकिकेनापि यथा तुष्यति वा गुरुः ॥ ५५ ॥
ततः सात्त्विकभावाश्च कृष्णांगेप्वर्जुनात्पुरा ।
उत्पन्नाः किंतु भगवान्बुद्धिमाच्छादयत्तदा ॥ ५६ ॥
सुखे पूर्णत्वमापन्ने शांते धाऽमृतसागरे ।
सारल्यं वर्तते तद्वद्भगवानप्यभाषत ॥ ५७ ॥
स प्राह शृण्वतां श्रेष्ठ शृणु तत्त्वं धनंजय ।
ज्ञानेन दह्यते माया ततो ज्ञानं दहत्यपि ॥ ५८ ॥

अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

इदानीमेव यः प्रोक्तोऽधियज्ञश्च त्वया श्रुतः ।
प्राणांतसमये तं मां पूर्वमेव स्मरंति ये ॥ ५९ ॥

देहं मिथ्येति ते मत्वा स्वस्वरूपं ययुस्तदा ।
यथा मठस्थं गगनमाकाशं व्याप्य तिष्ठति ॥ ६० ॥
गर्भागारे प्रतीताख्ये यत्रास्ते निश्चयस्थलम् ।
तत्रस्थस्य बहिर्भावसरणं न भवेत्ततः ॥ ६१ ॥
सबाह्याभ्यंतरं चैक्यं भूत्वा मद्रूपतां गतः ।
तस्य देहस्य पतनं न तत्सरणकारणम् ॥ ६२ ॥
यस्य वै स्थितिकालेऽपि नित्यत्वं मनुते न यः ।
कथं स दुःखं तत्पाते प्राप्नोति ब्रह्मतां गतः ॥ ६३ ॥
पूर्णानंदाब्धिनिर्धूतो ह्यस्त्यभावमुपागतः ।
स्थापितोऽनुभवो यस्य हृदये स चलेत्कथम् ॥ ६४ ॥
घटोऽगाधे जले मग्नः सबाह्यांतर्जलावृतः ।
भिन्ने तस्मिन्दैवगत्या तज्जलं भिद्यते नु किम् ॥ ६५ ॥
सर्पस्य कचत्यागात्सर्पनाशो भवेत्किमु ।
वस्त्रत्यागान्निदाघेऽपि का हानिर्देहिनोऽपि च ॥ ६६ ॥
तथा मिथ्याशरीरेऽस्मिन्व्याप्तं ब्रह्मैव विद्यते ।
बुद्धिर्भवेद्ब्रह्मरूपा तर्हि किं मरणाद्भयम् ॥ ६७ ॥
अंतकाले च मां तस्माज्ज्ञानन्देहं त्यजेद्य यः ।
स नु मद्रूपतां याति ह्यन्तःस्मरणमात्रतः ॥ ६८ ॥
'अंते मतिः सैव गतिः' सामान्यो नियमोऽस्ति हि ।
यं स्मरेदंतकाले यत्तद्रूपः स भविष्यति ॥ ६९ ॥
यथा भयाकुलो जीवो वायुवेगेन धावति ।
वेगात्पथि स्थिते कूपे धावमानः पतत्यसौ ॥ ७० ॥
न क्षमः पतनात्पूर्वं वेगस्याऽऽकलनाय सः ।
अतः कूपे स पतति नैव केनापि पातितः ॥ ७१ ॥
मृत्योश्चावसरे तस्माद्वस्तु यज्जीवसंमुखे ।
सन्तिष्ठति स तद्रूपं जीवो याति नचान्यतः ॥ ७२ ॥
मानवा जागृतौ यद्यत्पश्यंति चिंतयंति च ।
तत्तत्स्वप्नेऽपि पश्यंति दृष्टिसंमीलिता अपि ॥ ७३ ॥

यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम् ।
तं तमेवैति कौंतेय सदा तद्भावभावितः ॥ ६ ॥

प्राणप्रयाणसमयात्पूर्वं जीवस्य या रुचिः ।
सैवांतकाले वृद्धित्वं यात्यत्र संशयो नहि ॥ ७४ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

तस्माद्य मरणे यस्य विषयो रोचते हि यः ।
स तां गतिमवाप्नोति तस्मान्मत्स्मरणं कुरु ॥ ७५ ॥
चक्षुषा यत्प्रेक्षणीयं श्राव्यं श्रोत्रेण चैव यत् ।
मनसा भावनीयं च वाच्यं हि वचसा तु यत् ॥ ७६ ॥
सबाह्याभ्यंतरं सर्वमहमेवेति भावना ।
एवं पश्यन्सर्वकाले स्वभावादहमेव सः ॥ ७७ ॥
यदा सर्वत्र मद्रूपं पश्यसि त्वं तदा खलु ।
न नश्यसि गते देहे तर्हि युध्यस्व भारत ॥ ७८ ॥
मनो बुद्धिं च नूनं त्वं मद्रूपेऽर्पयसे यदि ।
मामेवैष्यसि तर्ह्येव प्रतिज्ञापूर्वकं ब्रुवे ॥ ७९ ॥
कथं भवेदिदमिति संदेहो जायते यदि ।
आदौ भव कृताभ्यासो न चेत्कोपं ततः कुरु ॥ ८० ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥ ८ ॥

एवमभ्यासयोगेन चित्तं तस्मिन्दृढीकुरु ।
पश्योपायबलेनैव पंगुर्लंघति पर्वतम् ॥ ८१ ॥
निरंतरतदभ्यासाच्चित्ते परमपूरुषम् ।
निधाय कुरु कर्तव्यं देहस्तिष्ठतु नश्यतु ॥ ८२ ॥
नानागतिसमापन्नं चित्तमात्मनि चेद्रतम् ।

तदा को नु स्मरेद्देहं तिष्ठंतं गतमेव वा ॥ ८३ ॥
सरिदोघश्च घोषेण युतः सिंधुजलं मिलन् ।
पश्चात्किं वर्तते वेत्तुं किं परावर्तते स वै ॥ ८४ ॥
नदीजलं सिंधुरूपं तथा चित्तं सुखात्मकम् ।
भवेच्च तदनुमाप्य सर्वदुःखतिरस्कृतम् ॥ ८५ ॥

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिंत्यरूपं
आदित्यवर्णं तमसः परस्तात् ॥ ९ ॥
प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥
यदक्षरं वेदविदो वदंति
विशंति यद्यतयो वीतरागाः ।
यदिच्छंतो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

निराकारा स्थितिर्यस्य न च जन्म मृतिस्तथा ।
व्यापकत्वेन यत्सर्वं सततं चानुपश्यति ॥ ८६ ॥
पुराणं गगनाद्यच्च यदणीयो ह्यणोरपि ।
यत्संनिधानाद्विश्वस्य व्यापाराः प्रभवन्ति च ॥ ८७ ॥
यस्माच्च जायते सर्वं येन धार्यते जगत् ।
न यत्तर्केण तर्क्येत यतोऽचिन्त्यं हि केवलम् ॥ ८८ ॥
नात्त्यग्निं कीटको, ध्वांतं प्रकाशो नैव गच्छति ।
तथाऽज्ञानं शरीरस्य नेक्ष्यते चर्मचक्षुषा ॥ ८९ ॥

निर्मलं सूर्यकिरणराशिवद्भासते च यत्।
प्रकाशदं ज्ञानिनां यदस्तो यस्य न विद्यते ॥ ९० ॥
प्रयाणकाले संप्राप्ते जानन्ब्रह्माव्ययं स्फुटम्।
स्थिरीभूतेन चित्तेन संसरन्वर्तते च यः ॥ ९१ ॥
पद्मासनं विरच्याथ चोत्तराभिमुखो बहिः।
उपविश्य सुखं जीवे धारयेत्क्रमयोगतः ॥ ९२ ॥
अंतर्मुखो मनोधर्मैः स्वरूपप्राप्तिहार्दतः।
ससंभ्रमः परंब्रह्म मीलितुं च त्वरान्वितः ॥ ९३ ॥
संपादितेन योगेन मध्यमामध्यमार्गतः।
ब्रह्मरंध्रं समागन्तुमग्निस्थानाच्च निर्गतः ॥ ९४ ॥
यन्मनःप्राणयोरैक्यं भासते तन्निरर्थकम्।
प्राणस्य लय आकाशे चित्तस्य न तथा भवेत् ॥ ९५ ॥
मनःस्थैर्येण यद्वस्तु भक्तिभावनया युतः।
योगशक्त्या समायुक्तः सज्जीभूतोऽनुतिष्ठति ॥ ९६ ॥
योगी स चित्तप्राणौ तु भ्रूमध्ये संनियम्य च।
तयोर्लयं प्रकुरुते घंटायां तद्ध्वनिर्यथा ॥ ९७ ॥
घटाच्छादितदीपस्य निर्याणं वेत्ति नो घटः।
तथा प्राणप्रयाणं हि न स वेत्ति कदाचन ॥ ९८ ॥
स केवलं परं ब्रह्म किं वा परमपूरुषः।
नाम्ना प्रथितमद्धाम साक्षात्प्राप्नोत्यसंशयम् ॥ ९९ ॥
ज्ञानस्य ये पराकाष्ठा ज्ञानस्य विषयोऽपि ये।
ते चापि ज्ञानिनः सर्वे वदंत्यपि तदक्षरम् ॥ १०० ॥
प्रचंडवातवेगेन गगनं किं नु भिद्यते।
वातस्य पुरतः स्थातुं तच्छक्तं न पयोधरः ॥ १०१ ॥
तथैव ज्ञानिना ज्ञातं यज्ज्ञानं तच्च नश्वरम्।
ज्ञेयातीतं च यज्ज्ञानं सहजं हि तदक्षरम् ॥ १०२ ॥
तस्मात्परा वेदविदो यद्वदंत्यक्षरं हि तत्।

---

सुषुम्नानाडी.

परमात्मस्वरूपं तद्यद्यास्ते प्रकृतेः परम् ॥ १०३ ॥
विषयाणां विषं त्यक्त्वा संयम्यैवेंद्रियाणि ये ।
उदासीनाः सदाऽऽसीना देहवृक्षतले नराः ॥ १०४ ॥
विरक्ताः पुरुषाश्चैवं निष्कामाश्च निरंतरम् ।
सर्वदा यदभिप्रेतं यस्य मार्गं विचिन्वते ॥ १०५ ॥
ब्रह्मचर्यादिकष्टान्ये यत्प्रेम्णा गणयंति नो ।
चेतसा निष्ठुरीभूय कुर्वतींद्रियनिग्रहम् ॥ १०६ ॥
एवं पदमिदं सम्यगगाधं दुर्लभं तथा ।
वेदोऽपि यत्स्वरूपं न शक्तो वर्णयितुं किल ॥ १०७ ॥
गच्छंति येऽक्षरे मग्ना देहपातात्तदक्षरम् ।
पुनरेव प्रवक्ष्यामि कथं गच्छंति तच्छृणु ॥ १०८ ॥
तदार्जुनोऽवदद्देव ! पृच्छासीच्च ममापि सा ।
त्वं हि चिंतामणिः साक्षात्कृपया वद सत्वरम् ॥ १०९ ॥
सुलभत्वेन वक्तव्यमित्युक्ते विश्वदीपकः ।
जानामि तुभ्यं संक्षेपाद्ब्रवीमीत्यब्रवीद्वचः ॥ ११० ॥
मनोवृत्तिगणा बाह्ये संचरंति स्वभावतः ।
तान्निरुध्य स्थापय त्वं हृदयाख्ये महाह्रदे ॥ १११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

यदाऽऽवृतानींद्रियाणां कपाटानि भवंति हि ।
तदा मनो निरुद्धं स्याद्धृदये निर्विकल्पकम् ॥ ११२ ॥
हस्तपादविहीनो यो न गच्छति गृहाद्बहिः ।
तथैव चित्तं हृदये तिष्ठत्यश्मसमं स्थिरम् ॥ ११३ ॥
शांते चित्तेऽर्जुन प्राणायामेनोंकारतां व्रजेत् ।
प्राणानिलं क्रमेणैव ब्रह्मरंध्रं समानयेत् ॥ ११४ ॥
यावन्मात्रात्रयं चार्धमात्रे हि लयतां व्रजेत् ।
तावद्धारणसामर्थ्यात्प्राणं तत्र स्थिरीकुरु ॥ ११५ ॥

ब्रह्माकाशे स्थिरीभूते प्राणे सति धनंजय ।
ततः स लग्नश्चोंकारबिंबे विलसति स्वयम् ॥ ११६ ॥

ॐमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥

ओंकारस्मरणं गच्छेद्लंभावं ततस्तदा ।
प्राणस्यापि भवेदंतस्तिष्ठेद्ब्रह्म सनातनम् ॥ ११७ ॥
तस्मात्प्रणवनामकं ब्रह्मैकाक्षरमद्वयम् ।
मम स्वरूपं परमं यदेवानुस्मरंति च ॥ ११८ ॥
एवं त्यजति यो देहं निश्चयेन स याति माम् ।
यत्प्राप्तेः परतो लाभो नास्ति तस्यान्य एव च ॥ ११९ ॥
यदि त्वं शंकसे पार्थ कथमेतद्भवेदिति ।
अंतकाले च स्मरणं दुर्लभं चैव सर्वथा ॥ १२० ॥
इंद्रियाणां संकटे तु जीवितांते ह्युपस्थिते ।
सबाह्याभ्यंतरे पश्यन्मृत्युचिह्नोदयं स्फुटम् ॥ १२१ ॥
कथमुत्थापनं कार्यं निरोधो वा कथं भवेत् ।
मनसा च भवेत्तत्र कथं वा प्रणवस्मृतिः ॥ १२२ ॥
इत्येवं संशयग्रस्तं मनो मा कुरु सर्वथा ।
यतो मद्भक्तियुक्तानां संकटे सेवकोऽस्म्यहम् ॥ १२३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

प्रवृत्तिं निगडीकृत्य विषयेभ्यस्तिलांजलिम् ।
दत्वा मां च हृदि स्थाप्य भुंजते ये सुखं सदा ॥ १२४ ॥
ते तद्भोगसमाधानं विस्मरंति क्षुधादिकम् ।
तदा नेत्रादींद्रियाणां चराकाणां तु का कथा ॥ १२५ ॥

एवं निरंतरं युक्ताश्चैकत्वेन मयि स्थिताः ।
अंतःकरणवृत्त्या च मद्रूपा मामुपासिताः ॥ १२६ ॥
स्मरंति तेंऽतकाले मां तर्हि तेषु कृपा मम ।
इति चेन्नित्ययुक्तानां पूर्वोपास्तिर्वृथा भवेत् ॥ १२७ ॥
आपत्सु दीनो यः कश्चिद्यदि मां शरणं व्रजेत् ।
तर्हि तस्यावने दक्षो नाहं किं वा व्रजेय किम् ॥ १२८ ॥
यदीदृशं स्वभक्तेषु कुर्यां प्रेम न चेत्कथम् ।
भक्तिं कुर्वन्ति, सततं किमर्थं भक्तिलोलुपाः ॥ १२९ ॥
यस्मिन्काले मत्स्मरणं तस्मिन्काले कृपा मम ।
कथं तेषां भक्तिभारं सोढुं संशक्नुयामहम् ॥ १३० ॥
ऋणीभूत्वा स्वभक्तानामानृण्यार्थमहं सदा ।
अंतकालागमे तेषां परिचर्यां करोमि वै ॥ १३१ ॥
देहक्लेशकरो यतो भक्तं मायाघतादिति ।
करोम्यहं ह्यात्मबोधपंजरस्थं निरंतरम् ॥ १३२ ॥
तदूर्ध्वं स्मरणाख्यां मे छायां च करवाण्यहम् ।
स्थिरबुद्धिं च तं नित्यं मद्रूपत्वं नयामि च ॥ १३३ ॥
देहांते संकटं तस्मान्नास्ति भक्तस्य मे कदा ।
सम्यक् स्वात्मनि तं तूर्णं सुखेनैव नयाम्यहम् ॥ १३४ ॥
त्यक्त्वात्मनश्चावरणं मिथ्याहंकारमृत्तिकाम् ।
मार्जयित्वा स्वस्वरूपं नयामि शुभवासनम् ॥ १३५ ॥
स्वदेहे प्रेमभक्तस्य नास्ति सामान्यलोकवत् ।
तस्मात्तत्त्यागमात्रेण वियोगो नैव भासते ॥ १३६ ॥
देहांतसमये तस्य प्राप्तिर्मम भवेदिति ।
इच्छापि न प्रभवति पूर्वं मद्रूपलाभतः ॥ १३७ ॥
शरीरसलिले चात्मसत्ता छायेव वर्तते ।
चंद्रिका नैव चंद्रः स्यात्सत्ता चंद्रस्य चंद्रिका ॥ १३८ ॥
एवं हि नित्ययुक्तानां सततं सुलभोऽस्म्यहम् ।
देहांते निश्चितं तस्माद्यांति मद्रूपतां हि ते ॥ १३९ ॥
तापत्रयादिकुंडं तत्क्लेशरूपतरोर्वनम् ।

शरीरं मृत्युकाकाय बलिरूपेण दीयते ॥ १४० ॥
यद्दोहनं च दैन्यस्य महाभयविवर्धनम् ।
सर्वदुःखसमाक्रांतमस्ति सत्यं कलेवरम् ॥ १४१ ॥
यन्मूलं दुर्गतीनां च कुमार्गफलरूपकम् ।
स्वरूपं केवलं यच्च व्यामोहस्य तु वर्तते ॥ १४२ ॥
संसारस्यासनं यच्च विकारोद्यानमेव च ।
भाजनं सर्वरोगाणां सत्यमेतत्कलेवरम् ॥ १४३ ॥
कालस्योच्छिष्टमन्नं यदाशापाशोऽस्ति केवलम् ।
जन्ममृत्युजीवनादि वर्तते यत्स्वभावतः ॥ १४४ ॥
भ्रांतिभिः पूर्णमेवं यद्विकल्परसनिर्मितम् ।
बहुनात्र किमुक्तेन वृश्चिकागारमेव यत् ॥ १४५ ॥
व्याघ्राणां क्षेमभूतं यत्तथा पण्यांगनासुहृत् ।
यंत्रं विषयविज्ञानस्येदं विद्धि कलेवरम् ॥ १४६ ॥
कृत्यायाश्च दयास्थानं तथा शीतविषोदकम् ।
विश्वासभवनं कूटतस्कराणां निरंतरम् ॥ १४७ ॥
यत्कुष्ठिनः परिष्वंगः कृष्णसर्पस्य मार्दवम् ।
गानं व्याधस्य सुरसं तालरागसमायुतम् ॥ १४८ ॥
आतिथ्यं वैरिणो यच्च यद्दुर्जनसमादरः ।
बहुनात्र किमुक्तेन यच्चास्तेऽनर्थसागरः ॥ १४९ ॥
यच्च स्वप्नगतस्वप्नो वनं मृगजलाशयम् ।
यद्धूम्ररजसा युक्तं गगनं वै कलेवरम् ॥ १५० ॥
एतादृशं शरीरं यत्सर्वानर्थकरं खलु ।
न तेषां लभते पार्थ ये मद्रूपे स्थिताः सदा ॥ १५१ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥ १६ ॥

ब्रह्माणं गर्वयुक्तं च पुनरावर्तनं कदा ।
न मुञ्चति, गतायुश्च वेत्ति दुःखं न जाठरम् ॥ १५२ ॥

प्रबुद्धः को नु मज्जेत दृष्टस्वप्नमहाह्रदे।
संसारेण न लिप्यंते तथा मद्रूपतां गताः ॥ १५३ ॥
यच्छिरो भुवनानां च, यच्चिरस्थायिनोऽग्रगम्।
यद्ब्रह्मभुवनं चास्ते त्रैलोक्याचलमस्तकम् ॥ १५४ ॥
आयुष्यममरेंद्रस्य न यस्य प्रहरो भवेत्।
चतुर्दशानामिंद्राणां क्षयो भवति यद्दिने ॥ १५५ ॥

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥ १७ ॥

चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते।
तावत्येव निशा तस्येत्यहोरात्रविनिर्णयः ॥ १५६ ॥
कालप्रमाणं यत्रैवं मनुष्याः संति तत्र ये।
पश्यंति ते दीर्घकालं स्वर्गस्थाश्चिरजीविनः ॥ १५७ ॥
सुरेंद्रस्यापि यत्रायुः क्षणिकं तत्र का कथा।
देवानां देवतानां वा यक्षादीनां धनंजय ॥ १५८ ॥
ब्रह्मणः प्रहरानष्टौ प्रेक्षते यः स्वचक्षुषा।
अहोरात्रविदं तं च प्रवदंति जना भुवि ॥ १५९ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे।
रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

भूतग्रामः स एवाऽयं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

उदये ब्रह्मणो लोके स्यात्साकारमिदं जगत्।
तस्य स्थितेरभिप्रायो व्यक्तीकर्तुं न शक्यते ॥ १६० ॥
चतुर्थे प्रहरे पूर्णे विश्वाकारोऽपि शुष्यति।
तस्योषसि पुनस्तच्च विश्वं भवति पूर्ववत् ॥ १६१ ॥
शरत्कालागमे मेघा लीयंते गगने पुनः।

ग्रीष्मांते च समुत्पन्नाः प्रवर्षंति यथा तथा ॥ १६२ ॥
तथा ब्रह्मदिनस्यादौ भूतसृष्टेश्च मेलनम् ।
चतुर्युगसहस्रांतं तत्तत्तत्रैव तिष्ठति ॥ १६३ ॥
रात्रेश्चावसरे विश्वमव्यक्ते संप्रलीयते ।
तथा युगसहस्रांते प्रभवे रच्यते पुनः ॥ १६४ ॥
एतद्वर्णनहेतुस्तु जगदुत्पत्तिसंयमौ ।
विधातुं सत्यलोकस्याप्यहोरात्रमलं भवेत् ॥ १६५ ॥
यः सृष्टिबीजभांडारं दीर्घायुश्च परंतप ।
तस्यापि पुनरावृत्तिगणना नहि शक्यते ॥ १६६ ॥
एवं त्रैलोक्यसृष्टिर्हि सत्यलोकस्य विस्तरः ।
दिनोदये तस्य भवेदेयं नित्यं धनुर्धर ॥ १६७ ॥
पुना रात्र्यागमे तच्च ह्यव्यक्ते संप्रलीयते ।
स्वभावात्साम्यतां याति यथास्थानं मदाज्ञया ॥ १६८ ॥
वृक्षत्वं हि यथा बीजे, मेघानां गगने लयः ।
अनेकत्वं समाविष्टं यत्र सा साम्यता स्मृता ॥ १६९ ॥

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

साम्ये विषमता नास्ति तस्माद्भूतं न तत्खलु ।
घृते दध्नि च दुग्धस्य नाम रूपं न दृश्यते ॥ १७० ॥
अगत्त्वं जगतो भ्रष्टं तथाऽऽकारस्य लोपतः ।
यत्र जातं तत्र गतं तत्रास्ति च यथातथम् ॥ १७१ ॥
निराकारतयाऽव्यक्तं व्यक्तं चाकारतः स्मृतम् ।
एकेन सूचितं चैकं वस्तुतस्तद्द्वयं नहि ॥ १७२ ॥
रजतस्य रसादेव भवेत्कठिनवीटिका ।
तस्या भवंत्यलंकारा न तत्र वीटिकारसौ ॥ १७३ ॥
रूप्ये यथा वीटिकात्वमलंकारत्वमेव च ।
तथैव व्यक्ताव्यक्तत्वं भासते ब्रह्मणि स्फुटम् ॥ १७४ ॥
अव्यक्तं नैव वा व्यक्तमनित्यं नित्यमेव च ।

तयोरनादिसिद्धं हि परं ब्रह्म सनातनम् ॥ १७५ ॥
यस्माद्विश्वमिदं जातं विश्ववत्तन्न नश्यति ।
यथाऽक्षराणां नाशेऽपि नैवार्थो हि प्रणश्यति ॥ १७६ ॥
तरंगोद्भवनाशेऽपि ह्यखंडमुदकं यथा ।
तथैव भूतनाशेऽपि परंब्रह्माऽविनाशि तु ॥ १७७ ॥
अलंकारे द्रवीभूते कनकं नैव नश्यति ।
तथा कलेवरे नष्टे भाति ब्रह्मामरं सदा ॥ १७८ ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

तस्याऽव्यक्ताभिधानेन गौरवं न भवेत्किल ।
यतो यन्मनसा बुद्ध्या प्राप्यं वै नास्ति सर्वशः ॥ १७९ ॥
यस्मिन्साकारतां याते निराकारो न लुप्यते ।
यस्य साकारलोपेन नित्यता न विघट्यते ॥ १८० ॥
ततोऽक्षरमिति प्रोक्ते सद्यो बोधस्तु जायते ।
यस्मात्परं हि न प्रेक्ष्यं तन्नाम परमा गतिः ॥ १८१ ॥
व्याप्य देहपुरे सुप्तमिव तत्रैव तिष्ठति ।
व्यापारं नैव कुरुते तथा कारयतीत्यपि ॥ १८२ ॥
किंतु शारीरचेष्टासु काचिच्चेष्टा न तिष्ठति ।
दशेन्द्रियाणां व्यापारः सोत्साहेन प्रवर्तते ॥ १८३ ॥
मनश्चतुष्पथे पश्य रम्यो विषयहाटकः ।
तत्र लाभश्च हानिश्च बाधेते चांशतो मनः ॥ १८४ ॥
सुखेन सुप्ते नृपतौ व्यापारो नैव तिष्ठति ।
तस्य राज्ये प्रकुर्वंति व्यापारं हि प्रजाजनाः ॥ १८५ ॥
बुद्धिधर्मा मनोधर्मा इंद्रियाणां क्रियास्तथा ।
तथैव प्राणवातस्य सर्वाश्च स्फुरणक्रियाः ॥ १८६ ॥

इमे च सर्वे व्यापारा भवंति कारकाद्विना ।
यथा सूर्यप्रकाशेन लोकोऽयं वर्तते तथा ॥ १८७ ॥
तद्वदर्जुन देहेऽस्मिन्स्वस्थोऽयं देहभूभुजः ।
तस्मात्पुरुष एवेति तं वदंति जनाः सदा ॥ १८८ ॥
पतिव्रतायां प्रकृतावेकपत्नीव्रते स्थितः ।
तस्माच्च कारणादेनं पुरुषं प्रवदंति हि ॥ १८९ ॥
वेदा विविच्यमानाश्च न यस्य प्रांगणं गताः ।
यस्मिन्रूपे च गमनमेकभागे स्थितं खलु ॥ १९० ॥
ज्ञात्वा योगीश्वराश्चैवं यद्वदंति परात्परम् ।
यश्चाऽनन्यगतीनां हि गृहं मृगयते स्वयम् ॥ १९१ ॥
तन्वा वाचाऽथ चित्तेन न जानंति परां कथाम् ।
सुक्षेत्रमेकनिष्ठायास्तेषामेव फलप्रदम् ॥ १९२ ॥
त्रैलोक्यमखिलं हीदं भगवद्रूपमेव तत् ।
एवं भावोऽस्त्यास्तिकानां पार्थ तेषां स चाश्रमः ॥ १९३ ॥
निर्गर्वाणां वैभवं यन्निस्पृहाणां सुखस्थलम् ।
गुणातीतस्य यज्ज्ञानं तथैव च परंतप ॥ १९४ ॥
संतोषिणां च यद्भोग्यं निश्चितानां प्रसूतिभूः ।
भक्तानां सुलभो मार्गो मोक्षग्रामप्रदर्शकः ॥ १९५ ॥
एकैकं किमु वक्तव्यं व्यर्थं बहु धनंजय ।
यत्र गत्वा नरो याति तद्रूपत्वं हि केवलम् ॥ १९६ ॥
पुरःस्थिते दिवानाथे तमो याति प्रकाशताम् ।
यथा चोष्णोदकं याति हिमत्वं हिमसंगतः ॥ १९७ ॥
तथैव पांडवाऽज्ञानं तत्कार्यं च जगद्यदा ।
परमार्थपुरं याति तदा मोक्षः स्वयं भवेत् ॥ १९८ ॥
यथेंधनं वह्निदग्धमग्निरूपेण भासते ।
पश्चाद्विभजने नैव काष्ठत्वेन कदाचन ॥ १९९ ॥
इक्षूद्भवा शर्करा वा नैवेक्षुत्वं पुनर्नयेत् ।
मतिमान्कोऽपि शास्त्रज्ञो मांत्रिको वा धनुर्धर ॥ २०० ॥
किंवा स्पर्शमणिस्पर्शाल्लोहं कनकतां व्रजेत् ।

नतु तत्कनकं लोहं भविष्यति पुनः कचित् ॥ २०१ ॥
दुग्धोद्भवं घृतं पश्चाद्दुग्धत्वं नैव गच्छति ।
तथा मद्रूपतां प्राप्ते पुनरावर्तनं नहि ॥ २०२ ॥
तन्निजं परमं धाम सत्यमस्ति ममैव तु ।
इदमंतर्गतं गुह्यं तचास्ति विशदं कृतम् ॥ २०३ ॥
देहत्यागे कृते योगी यां गतिं पार्थ गच्छति ।
तामेवाथ प्रवक्ष्यामि यथा ज्ञातुं सुखावहम् ॥ २०४ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

त्यजत्यकाले यो योगी नश्वरं हि कलेवरम् ।
पुनरावर्तनं तस्य देहस्य च भवेत्किल ॥ २०५ ॥
योग्यकाले त्यजन्देहं ब्रह्मीभवति तत्क्षणात् ।
अकाले मरणं चैव पुनः संसारकारणम् ॥ २०६ ॥
सायुज्यं च पुनर्जन्म कालाधीनं हि केवलम् ।
अतः कालस्वरूपं ते प्रसंगेन वदाम्यथ ॥ २०७ ॥
समीपे मरणे याते पार्थ त्यक्त्वा कलेवरम् ।
पंचभूतानि गच्छंति स्वस्वमार्गेण सत्वरम् ॥ २०८ ॥
एवं प्रयाणकालेऽपि बुद्धिर्न भ्रमतामियात् ।
स्मृतिश्चांधा न भवति मनसो मरणं नहि ॥ २०९ ॥
अयं हि चेतनावर्गो मरणेऽपि प्रकाशते ।
अनुभूतब्रह्मभावैर्विकृतिं याति न कचित् ॥ २१० ॥
चिद्रूपस्यांतपर्यंतमिन्द्रियाणां सहायता ।
जठराग्निप्रकाशेन सर्वमेतद्भविष्यति ॥ २११ ॥
पश्य दीपस्तु वातेन चोद्वेन निमील्यते ।
तत्काले विद्यमानायां दृष्टौ किं दर्शनं भवेत् ॥ २१२ ॥
तथा देहांतकाले तु वातवृध्या कफोद्भवः ।
भूत्वा शरीरं व्याप्नोति जठराग्निश्च शाम्यति ॥ २१३ ॥
तदा प्राणस्य प्राणत्वं बुद्धिश्च पंगुला भवेत् ।

तत्र देहे विना ह्यग्निं चेतना नैव तिष्ठति ॥ २१४ ॥
जठराग्नौ गते देहो न देहः किंतु कर्दमः ।
गाढे तमसि जीवोऽयं यत्र कुत्रापि गच्छति ॥ २१५ ॥
एवं हि पूर्वस्मरणं तस्मिन्नवसरे कुतः ।
तथा देहपरित्यागे स्वरूपं विंदते नु किम् ? ॥ २१६ ॥
तत्र देहः श्लेष्मरूपपंके मग्नो भवेद्यदा ।
पूर्वापरं च स्मरणं स लभेत तदा कथम् ॥ २१७ ॥
तस्मात्पूर्वकृताभ्यासो मृत्योः पूर्वं प्रणश्यति ।
यथा पूर्वं वस्तुलाभाद्दीपो निर्वाणतां व्रजेत् ॥ २१८ ॥
एवं ज्ञानस्य मूलं वै कारणं जठरानलः ।
प्रयाणसमये त्वग्नेर्बलं संपूर्णसाधकम् ॥ २१९ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

अंतरे जाठरं तेजो बहिश्चाप्युत्तरायणे ।
मासानां शुक्लपक्षश्च दिवसो मरणे शुभः ॥ २२० ॥
एवमादि शुभे योगे निरता ब्रह्मवादिनः ।
परित्यजंति स्वं देहं ब्रह्मभूता भवंति ते ॥ २२१ ॥
कालस्य देवताशक्तिरीदृशी महती खलु ।
मोक्षग्रामस्य मार्गोऽयं शुभकालः प्रकीर्तितः ॥ २२२ ॥
मोक्षसोपानकस्याद्यं पदं वै जाठरोऽनलः ।
तेजस्तथादितः शुक्लपक्ष एवोत्तरोत्तरम् ॥ २२३ ॥
औत्तरायणिको मासः सोपानस्यांतिमं पदम् ।
सायुज्यसिद्धिसदनं येन यांति च योगिनः ॥ २२४ ॥
इमं त्वमुत्तमं कालं विद्धि यस्यार्चिरादिकम् ।
मार्गं वदंति, वक्ष्येऽहं ते कालं मुक्तिदो न यः ॥ २२५ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

प्रयाणसमये वातश्लेष्मादेर्वर्धनादिह ।
व्याप्तेंतःकरणे घोरे तमस्यांध्यमुपैति च ॥ २२६ ॥
सर्वेंद्रियगतिस्तत्र कुंठिता च स्मृतिर्भवेत् ।
भ्रमे मग्ना, प्रमत्तं च मनः प्राणो विमुह्यति ॥ २२७ ॥
अग्नेरग्नित्वलोपेन ततो धूमः प्रसर्पति ।
शरीरचेतनाऽऽच्छन्ना भवत्येव शरीरिणः ॥ २२८ ॥
यथा ह्याच्छादिते चंद्रे निबिडेन घनेन च ।
सजलेन तदा भाति न प्रकाशो न वा तमः ॥ २२९ ॥
तदा मृत्युर्न जीवित्वं स्तब्धीभूत्वैव केवलम् ।
आयुर्दायस्यावसानान्मृत्युमार्गं समीक्षते ॥ २३० ॥
मनो बुद्धिरथेंद्रियाणि धूमव्याकुलितेषु च ।
आजन्मकृतलाभश्च सर्वं तेषां विनश्यति ॥ २३१ ॥
गते हस्तागते कालात्पुनर्लाभस्य का कथा ।
एवं हि जायते तस्मिन्प्रयाणसमये दशा ॥ २३२ ॥
देहस्यांतःस्थितिश्चैषं कृष्णा रात्रिस्तथा बहिः ।
दक्षिणायनगो मास एवं काल उपस्थितः ॥ २३३ ॥
पुनर्जन्मप्रदा ह्येवं कुयोगा यत्र मीलिताः ।
मोक्षस्य तत्र वार्तापि कथं स्याच्छ्रुतिगोचरा ॥ २३४ ॥
य एवमशुभे काले त्यजेद्योगी कलेवरम् ।
चंद्रलोकं प्राप्य पश्चात्पुनरावृत्तिमर्हति ॥ २३५ ॥
अकाल इति यः प्रोक्तो मार्गोऽयं धूमसंज्ञकः ।
पुनरावृत्तिनगरं देहिनं नयतीति च ॥ २३६ ॥
द्वितीयोऽथार्चिरादिस्तु मार्गः सुलभ उत्तमः ।
पुण्यकृज्जनसंपन्नो निवृत्त्याख्यपुरं गतः ॥ २३७ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

एवं मार्गौ ह्यनादी द्वौ तत्रैकः सरलस्तथा ।
अन्यो वक्रश्च सुभट दर्शितस्त्वां समासतः ॥ २३८ ॥

मार्गामार्गादिकं पश्येः सत्यमिथ्यादिकं तथा ।
हिताहिते च जानीहि स्वहितायैव केवलम् ॥ २३९ ॥
शुभां नौकां पुरः पश्यन्वदेऽगाधे पतेत्तु कः ।
सुपन्थानं विजानंश्च कुमार्गं को नु गच्छति ॥ २४० ॥
विषा-मृतगुणज्ञानी सुधां त्यक्तुं किमिच्छति ।
किं वा ज्ञात्वा सुपंथानं विपथं को नु गच्छति ॥ २४१ ॥
तस्मात्परीक्षयेदादौ सत्यासत्ये विशेषतः ।
एवं परीक्ष्याऽवसरे संकटे न पतेत्कदा ॥ २४२ ॥
नित्यं देहांतकालेऽयं मार्गश्चिताप्रदोऽस्ति वै ।
यतस्तेन विना योगाभ्यासो व्यर्थं गमिष्यति ॥ २४३ ॥
च्युतो मार्गादर्चिराख्यात्पतन्धूमपथे स तु ।
यद्धः संसारपाशेन भ्रमन्नेव हि वर्तते ॥ २४४ ॥
दृष्ट्वैवं परमं कष्टं तस्मान्मुक्तिः कथं भवेत् ।
तस्माद्वौ योगमार्गौ ते मया सम्यङ् निवेदितौ ॥ २४५ ॥
गच्छंत्येकेन ब्रह्मत्वं पुनरावृत्तिरेकतः ।
दैवगत्या तु देहान्ते यो यं प्राप्तो भवेत्स तु ॥ २४६ ॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

कदा किं वा भवेदस्य निश्चयं कः करिष्यति ।
तस्मात्सन्मार्गमातिष्ठन्सततं मोक्षभाग्भवेत् ॥ २४७ ॥
अस्तु गच्छतु वा देहः कैवल्यं वस्तु चास्म्यहम् ।
रज्वां सर्पत्वभासश्च रज्जुज्ञाने निवर्तते ॥ २४८ ॥
तरंगा मयि तिष्ठंतीत्येवं किं मन्यते जलम् ।
जलमेव तरंगास्ते तरंगा जलमेव च ॥ २४९ ॥
तरंगोत्पत्तिलोपाभ्यां जन्मनाशौ जलस्य न ।
तथा देही देहयोगात्सदेहं वस्तु केवलम् ॥ २५० ॥
ब्रह्मज्ञाने शरीरस्य न नामाप्यवशिष्यते ।
तदा केन च कालेन लयः कस्य भविष्यति ॥ २५१ ॥

किमर्थं शोधयेन्मार्गं केन कस्मात्कथं त्वियात् ।
देशकालादि सर्वं चेत्स्वयमेवास्ति तत्त्वतः ॥ २५२ ॥
घटभेदे घटाकाशं यदि मार्गो लभेदृजुः ।
याति तर्हि महाकाशं किं न याति तदन्यथा ॥ २५३ ॥
पश्येद् घटनाशेन घटाकाशः प्रणश्यति ।
गगनं तु यथावत्स्याद्घटोत्पत्तेः पुरापि तत् ॥ २५४ ॥
एवं सुबोधे पूर्णे तु मार्गामार्गादि संकटम् ।
सोऽहमित्यनुभूत्वा वै योगिनां न भवेत्कदा ॥ २५५ ॥
अतस्त्वमपि योगेन युक्तो भव धनुर्धर ।
सर्वकाले हि साम्यं तु सहजं तेन गच्छति ॥ २५६ ॥
कुत्रापि च कदाप्येवं देहस्तिष्ठतु गच्छतु ।
अयंधो नित्यभूतश्च ब्रह्मभावो न हीयते ॥ २५७ ॥
न जायते स कल्पादौ कल्पांते न विनश्यति ।
स्वर्गसंसारयोर्मध्ये मोहेनापि न मुह्यति ॥ २५८ ॥
एतद्बोधेन युक्तो यो भवेत्तेनैति तत्फलम् ।
लोपाच्च सर्वभोगानां निजरूपं प्रयाति सः ॥ २५९ ॥
भुंजंतींद्रादयो देवाः सर्वशःश्रेष्ठभोगिनः ।
तत्सुखं त्याज्यमेवेति तुच्छीकुर्वंति पांडव ॥ २६० ॥

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

कृतं वेदस्याध्ययनं सुपक्का यज्ञमूरभूत् ।
संपादितं च सर्वस्वं तपोदानादिकं खलु ॥ २६१ ॥
पुण्यास्योपवनं तच्च व्याप्तं फलभरेण हि ।
निर्मलं तत्परं ब्रह्म नच तेन समं भवेत् ॥ २६२ ॥
नित्यानंदाख्यमानेन तोलितं यद्भवेल्लघु ।

नौपम्यं यत्सुखप्राप्तौ वेदयज्ञादि गच्छति ॥ २६३ ॥
न जुगुप्स्यं समाप्यं न भोक्तुरिच्छाप्रपूरकम् ।
यन्महान्सुखलाभोऽपि कनीयान्ब्रह्मणः सुखात् ॥ २६४ ॥
एवं दृष्टं सुखं सर्वं मृत्यूर्ध्वं प्राप्यते च यत् ।
क्रते शतमखे चापि साम्यं नैति कदाचन ॥ २६५ ॥
अलौकिकं सुखं दिव्यदृष्ट्या पश्यंति योगिनः ।
मन्यंते तद्ब्रह्मसुखात्क्षुद्रात्क्षुद्रतरं तत् ॥ २६६ ॥
ये स्वर्गसुखसोपाने पदं दत्वा प्रयांति ते ।
परब्रह्मपदं यान्ति ज्ञानिनो नेतरे तथा ॥ २६७ ॥
चराचरैकभाग्यं यद्ब्रह्मेशाराधनं मतम् ।
भोग्यं भोगधनं चापि योगिनां यदिदं स्मृतम् ॥ २६८ ॥
या कला सकलानां च परमानंदपुत्तिका ।
जीवानां जीवनं विश्वस्थितानां प्राणिनां च यत् ॥ २६९ ॥
सर्वज्ञानप्रवाहो यः कृष्णः स्वकुलदीपकः ।
एवं धनंजयं मित्रं कथयामास कौरव ॥ २७० ॥
कुरुक्षेत्रस्य वृत्तांतं राजानं संजयोऽब्रवीत् ।
तामेव श्रूयतां वार्तां ज्ञानदेवोऽवदत्पुरः ॥ २७१ ॥

इति श्रीज्ञानेश्वरविरचितायां भावार्थदीपिकायां अनंतनिरूपणे
अष्टमोऽध्यायः ॥ ८ ॥

श्लो० २८ ओ० २७१

---

# गीर्वाणज्ञानेश्वरी



## नवमोऽध्यायः

श्रूयतामवधानेनाऽखिलसौख्यस्य पात्रता ।
लभ्यते श्रूयतां स्पष्टं तत्प्रतिज्ञोत्तरं मम ॥ १ ॥
न करोमि प्रौढिवादं सर्वज्ञानां सभास्वहम् ।
दीयतामवधानं मे विज्ञप्तिश्चास्ति बालवत् ॥ २ ॥
भवंत एव श्रीमंतो यदि मातृगृहा मम ।
बालकस्येव लालित्यात्स्यान्मनोरथपूरणम् ॥ ३ ॥
भवत्प्रसन्नताद्दृष्टिभूतोद्यानस्य संपदः ।
दृष्ट्वैव शीतलां छायां विश्रांतोऽहं सुखं शये ॥ ४ ॥
सौख्यामृतह्रदा यूयं यच्मीच्छानुगुणं ततः ।
बिभेमि यदि सख्याय क्व नु मे शांतता भवेत् ॥ ५ ॥
यथा बालकवाक्येनाऽस्पष्टेनापि पदक्रमैः ।
कौतूहलं विपर्यस्तैर्माता प्राप्नोति सर्वदा ॥ ६ ॥
तथैव वत्सलत्वेन सतां प्रीतिः कथं भवेत् ।
इति पूर्णेच्छयैवात्र युष्मत्स्नेहं वृणोम्यहम् ॥ ७ ॥
तदृते सर्वविज्ञाग्रे वक्तुं का योग्यता मम ।
मूढः सारस्वताभ्यासी समर्थः स्यां कथं नु भोः ॥ ८ ॥
सुमहानपि खद्योतः किमु तेजोनिधिं जयेत् ।
कथं योग्यः पाकरसो वस्तुं पीयूषभाजने ॥ ९ ॥
हिमांशोर्वीजनं, गानाचार्ये संगीतडंबरः ।
भूषणं भूषणानां च न कदापि क्षमं भवेत् ॥ १० ॥
ब्रूत किंचान्यतो गन्धं जिघ्रेत्परिमलः स्वयम् ।
सागरः स्नाति वा कूपे, नभो व्याप्तुं किमर्हति ॥ ११
भवद्विधानां विदुषां तृप्त्यर्हा वक्तृता क्व मे ।
संतृप्येताऽवधानेन यया सदसि मानसम् ॥ १२ ॥

विश्वप्रकाशकं भानुं चर्या नीराज्यते न किम् ।
अपांपतिं चांजलिनाऽप्यर्घ्यं नो दीयते किमु ॥ १३ ॥
दीनोऽप्यहं पूजयेय यूयं शंकरमूर्तयः ।
सशब्दनिर्गुंडीपुत्रैः स्वीकुरुध्वं ममार्चनम् ॥ १४ ॥
बालकस्तु पितुः पात्रे भुंजन्भोजयते च तम् ।
पिताप्यानंदतस्तस्य संमुखं कुरुते मुखम् ॥ १५ ॥
तथाहं भवतामग्रे करोमि स्वैरवल्गनम् ।
तेनैव तुष्यथ मुदा प्रेम्णो धर्मः स एव हि ॥ १६ ॥
यस्माद्भवंतो निर्व्याजं मयि प्रेम्णैव मोहिताः ।
तस्मान्मत्कृतसख्येन न वो भारो भविष्यति ॥ १७ ॥
मातुर्येत्सस्य संसर्गात्स्तन्यं प्रस्नूयतेऽधिकम् ।
यथा च प्रेयसो रोषात्प्रेम द्विगुणतामियात् ॥ १८ ॥
सुतं भवत्कृपालुत्वं श्रुत्वा मे बालभाषणम् ।
प्रबोधितमिति ज्ञात्वा स्नेहादुक्तं किमन्यद्हो ॥ १९ ॥
रुद्धा किं पाय्यते ज्योत्स्ना, वायुर्वेहति वेरितः ।
आच्छाद्यते वा गगनं केन वस्त्रादिना बृहत् ॥ २० ॥
यथा जलस्य स्रवणं, नवनीतस्य मंथनम् ।
तथा मदीयं व्याख्यानं लज्जामेति सतां पुरः ॥ २१ ॥
अखिवदं यत्र वेदोऽपि सुखं स्वपिति कुंठितः ।
तं गीतार्थं प्राकृतेन वक्तुं शक्नोम्यहं कथम् ॥ २२ ॥
एवं सत्यपि मे बुद्धिः पुरस्यैकाशयान्विता ।
जाताऽतो धैर्यमास्थाय युष्मत्प्रेमकृते ध्रुवे ॥ २३ ॥
चंद्रादप्यधिकं शांतं, जीवनं चामृतादपि ।
मय्यस्तु प्रेम भवतां पूर्णः स्यान्मे मनोरथः ॥ २४ ॥
भवत्कृपादृष्टिवर्षे स्याद्बुद्धिः सकलार्थदा ।
औदासीन्ये स्वयं शुष्येद्रूढो ज्ञानांकुरोऽपि मे ॥ २५ ॥
यस्मद्वकृत्वविस्तारेऽवधानं पोषकं च यः ।
तथाऽक्षरप्रमेयाणां विकासो भविता स्वयम् ॥ २६ ॥
शब्दार्थेर्दर्थमारूढा विविधार्थाद्भवस्ततः ।

भक्तिरूपा पुष्पवृष्टिर्वृद्धौ स्यात्प्रेमवर्धनी ॥ २७ ॥
कथासुगंधपवने वाति सिद्धांतमेघराट् ।
वक्तुर्हृदि वहेदंबु रसभंगोऽन्यथा भवेत् ॥ २८ ॥
यच्चंद्रकांतो द्रवति चंद्रस्यैव प्रभावतः ।
तथैव वक्तुर्वक्तृत्वं श्रोत्रधीनमसंशयम् ॥ २९ ॥
न तंदुलाः प्रार्थयंति भोक्तृन्स्वस्वादुताकृते ।
नहि चित्राण्यर्थयंति सूत्रधारं स्वनर्तने ॥ ३० ॥
स नर्तयति यत्नानि स्वकौशल्यप्रसिद्धये ।
तस्मान्न मे स्वटाटोपकारणं प्रार्थनादितः ॥ ३१ ॥
श्रुत्वेदं गुरुणाप्युक्तमलं प्रास्ताविकेन ते ।
यत्तु नारायणेनोक्तं तद्यथावद्वदाधुना ॥ ३२ ॥
तुष्यन्निवृत्तिदासोऽपि तथेति प्रोक्तवान्वचः ।
श्रीकृष्णोऽकथयद्यत्तत्कथयाम्यवधार्यताम् ॥ ३३ ॥

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

श्रूयतां पार्थ बीजं यत्कथयामि तवाग्रतः ।
ममांतःकरणस्थं तदपि गूढं वदामि ते ॥ ३४ ॥
इदं जीवगतं गुह्यं किंवा प्रस्फोट्यते त्वया ।
इति शंकां स्वभावेन हृदि कल्पयसे यदि ॥ ३५ ॥
तर्हि प्राज्ञ शृणुष्वेह त्वमास्था मूर्तिमत्यसि ।
तस्मान्न हि मदुक्तस्य त्वमवज्ञां करिष्यसि ॥ ३६ ॥
अतः सुगूढमत्यंतमवाच्यं च प्रकाश्यते ।
किंत्वसद्गूढतं तेऽद्य हृदये विशतादिति ॥ ३७ ॥
दुग्धमास्ते स्तने गूढं स्तनो वेत्ति न तद्रसम् ।
तथाप्यनन्यवत्साय माता पाययति स्वयम् ॥ ३८ ॥
गृहस्थितं धान्यबीजमुप्तं भूमावितस्ततः ।

तन्नष्टं भ्रष्टमिति वा वक्तुं योग्यं न कस्यचित् ॥ ३९ ॥
अतः शुद्धमतिर्धीमाननन्यगतिरेव च ।
अनिंदकश्च यस्तस्मै वाच्यं हृद्गतमप्यलम् ॥ ४० ॥
प्रकृते सद्गुणाढ्यश्च त्वां विना कोऽस्ति मेऽधिकः ।
तस्माद्गूढमपि ते नाऽपिधातुमिहोत्सहे ॥ ४१ ॥
शश्वदेवं प्रकथनं स्यात्तव त्रासदायकम् ।
ब्रह्मज्ञानमतस्तेऽद्य सप्रपंचं वदाम्यहम् ॥ ४२ ॥
सत्यमिथ्यामिश्रणेऽपि परीक्ष्यैव परीक्षकाः ।
तयोरसत्यं संत्यज्य संगृह्णंति सदैव हि ॥ ४३ ॥
राजहंसो यथा नीरं क्षीरं च कुरुते पृथक् ।
तथा ज्ञानं च विज्ञानं विभज्य कथयामि ते ॥ ४४ ॥
यथा वा शूर्पधारायां पतितं धान्यमंततः ।
बुसं गच्छति वातेन शुद्धं तदवशिष्यते ॥ ४५ ॥
तथा ज्ञानोदये जाते संसारो नाशमृच्छति ।
दुष्प्राप्यं समवाप्नोति मोक्षैश्वर्यं न संशयः ॥ ४६ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

सद्विद्यायाः पदं यच्च गुर्वाचार्यपदास्पदम् ।
गुह्यानामपि यद्गुह्यं पवित्राणां प्रभुश्च यत् ॥ ४७ ॥
सद्धर्मस्य निजं धाम सूत्तमेपूत्तमं तथा ।
यत्प्राप्तौ सहसा न स्यात्पुनर्जननसंभवः ॥ ४८ ॥
गुरोर्मुखान्निःसृतं सद्धृदि शिष्यस्य भासते ।
सुगूढं हृदयस्थं हि प्रत्यक्षं स्यात्स्वरूपतः ॥ ४९ ॥
तथाहि सुखसोपानारोहणं च प्रतीयते ।
यद्दृष्ट्वा जीवशिवयोरैक्यं स्यादप्रयत्नतः ॥ ५० ॥
तथापि ज्ञानसीमायां प्राप्ते चित्ते सुखोदयः ।
एवं परब्रह्मरूपज्ञानं सुलभमेव तत् ॥ ५१ ॥

संत्यन्येऽपि गुणाश्चास्याऽनुभूतं नोनतामियात् ।
न च क्षयमवाप्नोति नैव जीर्णत्वमृच्छति ॥ ५२ ॥
एवंगुणं चेत्तद्वस्तु लोकादुर्वरितं कथम् ।
इति त्वं तार्किकोऽपीह शंकां मा कुरु पांडव ॥ ५३ ॥
ये चैकोत्तरवृद्ध्यर्थं प्रयतंते दिवानिशम् ।
ते पतंति कथं त्यक्त्वा द्रव्यं प्रज्वलितेऽनले ॥ ५४ ॥
पवित्रं परमं रम्यं सुखोपायो यतो भवेत् ।
अत्यंतं सुखदं धर्म्यं समीपे स्वस्य तिष्ठति ॥ ५५ ॥
एवं चेत्सुलभं लोकग्रहादुर्वरितं कथम् ।
इति शंकास्थलेऽप्यत्र न शंकेथास्त्वमण्वपि ॥ ५६ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥ ३ ॥

पवित्रं मधुरं दुग्धं संस्थितं यत्त्वचोंऽततः ।
तं त्यक्त्वा रक्तपः प्राणी न रक्तं किमु सेवते ॥ ५७ ॥
दर्दुरः पद्मकंदश्च सदैवैकत्र तिष्ठतः ।
पद्ममास्वाद्यते भृंगैः पंकमेवात्ति दर्दुरः ॥ ५८ ॥
दुर्दैवस्य गृहे गूढं धनमास्ते सहस्रशः ।
स च तस्योपरिस्थोऽपि क्लिश्नात्येव क्षुपोपितः ॥ ५९ ॥
तथा निधानं सौख्यानां सदैव हृदयस्थितम् ।
विहाय मां सुखारामममज्ञास्तु विषये रताः ॥ ६० ॥
दृष्ट्वा मृगजलं सद्यस्त्यजत्याननगां सुधाम् ।
अथवा शुक्तिकालाभादुज्झेत्स्पर्शमणिं गलात् ॥ ६१ ॥
तथाऽहंममताग्रस्ता दुर्बला यांति मां न ते ।
जन्ममृत्यूभयतटमग्ना मज्जंत्यहर्निशम् ॥ ६२ ॥
नित्यदाहं तथैवास्मि सन्मुखो भानुमानिव ।
क्वचिदस्ति क्वचिन्नेति विपर्यासो न चास्ति मे ॥ ६३ ॥

मया ततमिदं विश्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

मम स्वरूपविस्तारो जगदेतच्चराचरम् ।
यथा दुग्धं दधि भवेत्परिणामेन केवलम् ॥ ६४ ॥
बीजानि तरुतां यांति, हेमाऽलंकारतामपि ।
तथा ममैव विस्तारश्चराचरमिदं जगत् ॥ ६५ ॥
यन्निराकारमेवेदं विश्वाकारेण विस्तृतम् ।
निर्गुणात्सगुणत्वेन त्रैलोक्यं निर्मितं मया ॥ ६६ ॥
महदादीनि देहांतं भूतजातान्यशेषतः ।
प्रतिबिंबितानि मयि जले फेनोपमानि हि ॥ ६७ ॥
निरीक्षिते तु फेनांतर्न जलं पार्थ दृश्यते ।
स्वप्ने दृष्टाः पदार्थास्तु जागरे यांति संक्षयम् ॥ ६८ ॥
तथैवेमानि भूतानि मयि भांति न तेष्वहम् ।
अस्योपपत्तिस्ते सम्यक्पूर्वमेव प्रपंचिता ॥ ६९ ॥
अस्त्विदं पूर्वमेवोक्तं नार्थश्चर्वितचर्वणे ।
त्वद्दृष्टिः पार्थ मद्रूपे भूयात्स्थिरतरा सदा ॥ ७० ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

यदि पश्यसि मद्रूपं यथावत्कल्पनामृते ।
तर्हि मिथ्येति बुद्धिः स्यात्ततः सर्वगतोऽस्म्यहम् ॥ ७१ ॥
संकल्पात्तमये बुद्धिनेत्रमांद्ये ह्युपस्थिते ।
मत्तो भिन्नानि भूतानि भांति मद्व्यसतावपि ॥ ७२ ॥
लीने संकल्पसंध्यांश्येऽवशिष्टः केवलोऽस्म्यहम् ।
नष्टे यद्वद्भ्रांतिसर्पे पुष्पहारोऽवशिष्यते ॥ ७३ ॥
कचिन्न, मृद्घटादीनां स्याच्च भूमेः समुद्भवः ।
किंतु चक्रादिसाद्येन कुलालः प्रकरोति तान् ॥ ७४ ॥

अथवा सागरे नास्ते तरंगाणां खनिः क्वचित् ।
वायोरास्फालनवशादुत्पद्यंते जलोर्मयः ॥ ७५ ॥
किंच कार्पासराशौ किं गूढाऽऽस्ते वस्त्रपेटिका ।
परिधातुर्दशा नूनं कार्पासो वस्त्रतां गतः ॥ ७६ ॥
हेम्नोऽलंकारभावेऽपि हेमत्वं नैव नश्यति ।
तथापि भूषाधर्तॄणामस्त्यलंकारभावना ॥ ७७ ॥
प्रतिध्वनिर्ध्वनेरेवाऽऽदर्शेऽपि प्रतिबिंबकम् ।
तत्किं तस्मात्समुत्पन्नं स्वतो वा ब्रूहि तत्त्वतः ॥ ७८ ॥
एवं शुद्धे मत्स्वरूपे यो भूतानि प्रकल्पते ।
तस्य स्वीयविकल्पेन भूतानां तत्र भावना ॥ ७९ ॥
विकल्पात्मकमायाया लोपे भूतक्षयो भवेत् ।
ततोऽवशिष्टं निर्लेपं पार्थ रूपं ममाखिलम् ॥ ८० ॥
कृते स्वांगभ्रामणेऽपि भ्रमंतो भांति पर्वताः ।
तथा ब्रह्मस्वरूपेऽपि कल्प्यते भूतभावना ॥ ८१ ॥
त्यक्ते विकल्पे भूतानि मयि भूतेष्वहंदृशिः ।
नोदेति यद्वत्स्वप्नेऽपि कल्पनाया निरासतः ॥ ८२ ॥
एकोऽस्मि भूतधर्ताऽहमथवा भूतवासनः ।
संकल्पसन्निपातेन तदिदं जल्पनं भवेत् ॥ ८३ ॥
प्रियोत्तम शृणु ततो यद्विश्वव्यापकोऽस्म्यहम् ।
आश्रयो भूतजातानां कल्पनाविषयः सदा ॥ ८४ ॥
रश्म्याधारान्मृगजलाभासो मिथ्यापि भासते ।
एवं मय्यपि भूतानि कल्पयंति च तेषु माम् ॥ ८५ ॥
जानंति मां सृष्टिकरं जीवाभिन्नोऽस्मि वस्तुतः ।
यथा प्रकाशो भानुश्च ह्येकत्वेनैव वर्तते ॥ ८६ ॥
एवमैश्वर्ययोगो मे ज्ञातश्चेत्तद्वदस्व माम् ।
किमु द्वैतस्य संबंधो लेशतोऽप्यस्ति वास्तवे ॥ ८७ ॥
मत्तस्तथैव भूतानि सत्यं संति न वै पृथक् ।
भूतभिन्नं वितिष्ठंतं बुध्यस्व न कदापि माम् ॥ ८८ ॥

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

विस्तीर्णं गगनं यावत्तावानस्ति समीरणः ।
चलनाद्दृश्यते भिन्नो वस्तुतश्चैक एव हि ॥ ८९ ॥
तथैवेदं भूतजातं कल्पितं मयि भासते ।
कल्पनायामपेतायामहमस्म्यद्वयः सदा ॥ ९० ॥
तस्माद्भूतानि जातानि नष्टानीत्यस्ति कल्पना ।
तस्या नाशे तु सर्वाणि विलीयंते तया सह ॥ ९१ ॥
विनष्टे कल्पनामूलाज्ञाने लोपस्तयोः सह ।
स्यादथैश्वर्ययोगं मे शृणुष्वाऽवहितः पुरः ॥ ९२ ॥
प्रतीतिबोधजलधौ तरंगोऽसि त्वमेव हि ।
चराचरे जगत्यस्मिंस्त्वमेव व्याप्य तिष्ठसि ॥ ९३ ॥
पार्थं पप्रच्छ भगवान्बुद्धमेवं किमु त्वया ।
द्वैतस्वप्ने मृषेत्येवं यथावज्ज्ञातवानसि ॥ ९४ ॥
तथापि पार्थ बुद्धेस्ते कल्पनारूपनिद्रया ।
अद्वैतबोधो नष्टः स्याद्द्वैतस्वप्ने भ्रमिष्यसि ॥ ९५ ॥
तन्निद्रामार्गभंगेन शुद्धज्ञान्यसि तत्त्वतः ।
एवं भावे वच्मि वर्म शृणुष्वावहितोऽधुना ॥ ९६ ॥
धनुर्धर शृणुष्वेदं धैर्यवांस्त्वं धनंजय ।
उत्पत्तिस्थितिनाशादि कार्यं माया करोत्यलम् ॥ ९७ ॥

सर्वभूतानि कौंतेय प्रकृतिं यांति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

यामाहुः प्रकृतिं सा हि द्विविधोक्ता तवाग्रतः ।
तामष्टधा वदंत्येके द्वितीया जीवरूपिणी ॥ ९८ ॥
मायास्वरूपविस्तारः पूर्वमेव श्रुतस्त्वया ।
किमर्थं कथनं तस्याः करवाणि मुहुर्मुहुः ॥ ९९ ॥
महाकल्पांतसमये सर्वभूतानि चैक्यताम् ।

मम प्रकृतिरूपेऽस्मिन्नव्यक्ते याति सर्वतः ॥ १०० ॥
ग्रीष्मस्यात्युष्णतापेन सबीजानि तृणान्यपि ।
भवंति भूमौ लीनानि संभवंति पुनस्तथा ॥ १०१ ॥
वर्षाकालीनमेघस्य साटोपः शरदागमे ।
सर्वतोऽपि लयं याति मेघस्तु गगनांतरम् ॥ १०२ ॥
किंवाऽऽकाशावकाशेऽपि लयं याति समीरणः ।
निर्वाते च तरंगाणां जले लोपोऽपि जायते ॥ १०३ ॥
किंवा जागृतिवेलायां स्वप्नो मनसि लीयते ।
प्राकृतं प्रकृतौ तद्वत्कल्पांतेऽथ विलीयते ॥ १०४ ॥
कल्पादौ तु पुनश्चाहं सृजामीति जनश्रुतिः ।
एतस्मिन्विषये सम्यगुपपत्तिं वदामि ते ॥ १०५ ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

पार्थमामेव मन्मायां स्वभावात्स्वीकरोम्यहम् ।
उपादानतया वस्त्रनिर्माणे तंतवो यथा ॥ १०६ ॥
येन्ना तद्वयनोद्योगे स्वाश्चतुष्कांकितः पटः ।
तद्वत्पंचमहाभूताकारा माया प्रकाशते ॥ १०७ ॥
यथा दुग्धं स्वभावेन दधित्वं याति तंचनात् ।
तथा माया सृष्टियोगात्सृष्टिरूपेव जायते ॥ १०८ ॥
यथा जलेन बीजानां भवेच्छायादिविस्तरः ।
तथैव सृष्टिविस्तारो जातो मत्सन्निधानतः ॥ १०९ ॥
राज्ञा नगरनिर्माणं कृत तत्सत्यमेव हि ।
परं किं तस्य निर्माणे राज्ञो हस्तादिपीडनम् ॥ ११० ॥
यश्च व्याप्रियते स्वप्ने जागरेऽपि स एव हि ।
मम प्रकृत्यधिष्ठानं तद्वज्ज्ञानीहि तत्त्वतः ॥ १११ ॥
स्वप्नाच्च जागरे यातुः किं भवेत्पादवेदना ।
स्वप्नेऽपि तिष्ठतः किं वा प्रवासो भवति क्वचित् ॥ ११

एतद्विवरणस्यायमाशयः सृष्टिसर्जने ।
नहि कश्चिन्ममायासः प्रायशो भवति क्वचित् ॥ ११३ ॥
राजाधीनाः प्रजाः स्वार्थे व्यापारं तन्वते सदा ।
तद्वन्मदीयः संबंधो मायैव कुरुतेऽखिलम् ॥ ११४ ॥
पूर्णचंद्रोदये जाते वृद्धिं प्राप्नोति सागरः ।
तत्र प्रयासश्चंद्रस्य पार्थ किं स्यान्मनागपि ॥ ११५ ॥
अयस्कांतस्य सान्निध्याद्यल्लोहं भ्राम्यति स्वतः ।
तत्रायासश्चुंबकस्य न मनागपि विद्यते ॥ ११६ ॥
अनेन विस्तरेणालं, मायां स्वीकरवै यदा ।
तदा चराचरस्यास्य विस्तारो भवति क्षणात् ॥ ११७ ॥
भूतग्रामः स एवायं पांडव प्रकृतेर्वशे ।
आस्ते, बीजप्ररोहादौ समर्था भूमिरेव हि ॥ ११८ ॥
किंवा बाल्यादिवयसः कारणं देहसंगमः ।
मेघोद्भवस्तथाऽऽकाशे वर्षर्तुस्तत्र कारणम् ॥ ११९ ॥
स्वप्नस्य कारणं निद्रा, पांडव प्रकृतिस्तथा ।
अशेषप्राणिसंघस्य सैवास्ते मुख्यकारणम् ॥ १२० ॥
स्थावरं जंगमं चैव स्थूलं सूक्ष्मं तथैव च ।
किं बहूक्त्वाऽस्य विश्वस्य प्रकृतिर्मूलकारणम् ॥ १२१ ॥
तस्मादिदं भूतसृष्टिर्निर्मितायाश्च पालनम् ।
सर्वथेदं द्वयमपि नूनं नैवास्ति मद्वशे ॥ १२२ ॥
जले विलसति ज्योत्स्ना तत्र चंद्रः करोति किम् ।
तथैवैतानि कर्माणि मत्तस्तिष्ठंति दूरतः ॥ १२३ ॥

न च मां तानि कर्माणि निबध्नंति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

सिंधौ रुद्धो महापूरो न सिंधुं बाधितुं क्षमः ।
कर्मणामहमाधारो बध्नीयुस्तानि मां कथम् ॥ १२४ ॥
कथं नु धूम्रकल्लोलो वातं रोद्धुं क्षमो भवेत् ।
सूर्यबिंबेऽधकारस्य प्रवेशः स्यात्कदि क्वचित् ॥ १२५ ॥

तुदंति किमु वा धाराः पर्जन्यस्य नगोदरम् ।
तथैव कर्मणां बाधा न मां भवति पांडव ॥ १२६ ॥
प्रकृतेः कार्यविस्तारेऽप्यस्म्यहं मुख्यकारणम् ।
तथापि तत्रोदासीनः कारयामि करोमि न ॥ १२७ ॥
गृहे प्रतिष्ठितो दीपो न कारयति कस्यचित् ।
करोति न करोतीति लोकास्त्वालोचयत्यपि ॥ १२८ ॥
स केवलं साक्षिभूतो गृहकृत्येषु सर्वदा ।
एवं प्राणिषु संतिष्ठन्नुदासीनोऽस्मि तत्कृतौ ॥ १२९ ॥
अभिप्रायोऽयमेव त्वां किं वक्तव्यं मुहुर्मुहुः ।
तत्सुभद्रापते विद्धि यदेतावत्प्रपंचितम् ॥ १३० ॥

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौंतेय जगद्विपरिवर्तते ॥ १० ॥

समस्तसृष्टिकार्याणां कारणं सविता यथा ।
जगतः प्रभवे हेतुर्मुख्यः पंडुसुताऽस्म्यहम् ॥ १३१ ॥
स्वीकरोमि यदा मायां तदा सा सूयते जगत् ।
अतो जानंति सर्वेऽपि मां विश्वोत्पत्तिकारणम् ॥ १३२ ॥
मत्तो भूतानि जायंते यस्मान्नि न च तेष्वहम् ।
पश्य ज्ञानप्रकाशेन पार्थ मे योगमैश्वरम् ॥ १३३ ॥
मयि तिष्ठंति भूतानि नैवाहं तेष्ववस्थितः ।
उक्तं पूर्वमिदं वर्म न विस्मर कदार्जुन ॥ १३४ ॥
तदिदं गूढतत्त्वं मे दर्शितं विशदं हि ते ।
आवृत्त्येंद्रियजान्भोगानंतश्चानुभवं भज ॥ १३५ ॥
यावन्नेदं हस्तगतं तावत्पार्थ न लभ्यते ।
यत्सत्यरूपलाभोऽपि तुषांतर्वर्तिधान्यवत् ॥ १३६ ॥
अनुमानबलेनैव प्राप्तं ब्रह्मेति मन्यते ।
तद्वृथा, सिंचनं भूमेर्न स्यान्मृगजलाम्भसा ॥ १३७ ॥
जले प्रसारिते जाले भासतेऽब्जोऽपि जालगः ।
तीरे स्थित्वाऽऽलोचने तु स्वच्छं बिंबं प्रदृश्यते ॥ १३८ ॥

ब्रुवतेऽनुभवस्यापि वाचालत्वेन ये कथाः।
तेषां परीक्षासमयेऽनुभवो निष्फलो भवेत् ॥ १३९ ॥

अवजानंति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानंतो मम भूतमहेश्वरम् ॥ ११ ॥

दुःखरूपाद्भवाद्भीतो मल्लाभं त्वं यदीच्छसि।
तर्हीमामुपपत्तिं द्राक्चित्ते धारय संततम् ॥ १४० ॥
कामलार्दितनेत्रस्तु पीतां पश्यति चंद्रिकाम्।
तद्वद्भवंति मूढास्तु मद्रूपे दोषदृष्टयः ॥ १४१ ॥
ज्वरेण मुखवैरस्ये दुग्धं स्याद्विपवत्कटु।
एवं निर्दोषमद्रूपे दोषं पश्यंत्यहो नराः ॥ १४२ ॥
तस्मात्पार्थ मुहुर्वच्मि प्रोक्तं तत्त्वं न विस्मर।
पश्यसि स्थूलदृष्ट्या चेत्सर्वो यत्नोऽपि निष्फलः ॥ १४३ ॥
पश्यंतः स्थूलदृष्ट्या मां न जानंति यथार्थतः।
स्वप्ने पीतामृताः क्वापि नाऽमराः संभवंति ते ॥ १४४ ॥
स्थूलदृष्ट्याल्पमतयो ब्रुवते विप्र इत्यपि।
तेषां स्थूलाज्ञानमेव भवति प्रतिबंधकम् ॥ १४५ ॥
जले ज्योत्स्नां समालोक्य हंसा मुक्ताफलोत्सुकाः।
त्यक्त्वाऽऽकाशं यतंतश्च स्वघातं कुर्वते यथा ॥ १४६ ॥
गंगां मुक्त्वा मृगजले धावतां किं फलं भवेत्।
कल्पद्रुमुज्झ्य वब्बूलं को वार्थः सेवतां तथा ॥ १४७ ॥
नीलरत्नमयं हारं मत्वा हस्ते धृतः फणी।
किं वा मत्वा नीलमालां गृहीतोऽजगरः करे ॥ १४८ ॥
यद्वा निधानं विज्ञाय खदिरांगारधारणम्।
प्रतिबिंबं जले दृष्ट्वा कूपे पतति केसरी ॥ १४९ ॥
मत्वा मामपि साकारं वर्तंते दृढभावतः।
ते चंद्रबुद्ध्या जलगां तच्छायां धर्तुमुद्यताः ॥ १५० ॥
किंवा यः कांजिकं पीत्वा तत्रेच्छति सुधागुणम्।

एवं तेषां दृढो भावः सर्वथा व्यर्थ एव हि ॥ १५१ ॥
नश्वरं स्थूलरूपं मे मन्वते येऽविनाशिनम् ।
मां भजंति च भावेन कथं तान्प्राप्नुयामहम् ॥ १५२ ॥
अन्धैः पश्चात्तटे गंतुं पूर्वमार्गावलंबनम् ।
को वा कर्णाँल्लमेज्जातु प्रसभं तुषकण्डनात् ॥ १५३ ॥
तद्वज्ज्ञात्वा स्थूलरूपं शुद्धरूपं लमेन्न सः ।
पायं यायात्फेनपायी जलपानफलं किमु ॥ १५४ ॥
तस्मान्मुग्धमनोधर्मैर्बुद्धा साकारमेव माम् ।
जन्ममृत्यादिकर्माणि मय्यध्यस्यंति तद्वथा ॥ १५५ ॥
अनामानं यथा नाम क्रियाहीनमपि क्रियाम् ।
विदेहं देहधर्मांश्चाऽऽरोपयंति मृषैव हि ॥ १५६ ॥
आकारशून्ये चाकारो ह्युपचारोऽनुपाधिके ।
विधिहीने कल्पयन्ति व्यवहारादिकं मयि ॥ १५७ ॥
वर्णहीने तथा वर्णं गुणातीते गुणानपि ।
हस्तहीने तथा हस्तौ पादहीनेंऽघ्रियुग्मकम् ॥ १५८ ॥
अमेयस्यापि मे मानं, स्थानं सर्वगतस्य च ।
गाढनिद्राप्रसुप्तस्य घनश्यालोचनादिवत् ॥ १५९ ॥
कर्णौ श्रोत्रविहीनस्य ह्यचक्षुष्कस्य लोचने ।
गात्रं वर्ष्मविहीनस्य रूपहीनस्य रूपकम् ॥ १६० ॥
अव्यक्तं ब्रुवते व्यक्तमिच्छाहीनं स्पृहायुतम् ।
अतृप्तत्वं स्वतस्तृप्तेऽप्यन्यथा भावयंति हि ॥ १६१ ॥
अनावृते चावरणं भूषाहीनेऽपि भूषणम् ।
कारणानां कारणं च मन्यंते मामतंद्रितम् ॥ १६२ ॥
निराकारस्य मूर्तिं च स्वयंभोः स्थापनं तथा ।
सर्वगस्यापि कुर्वंति ह्यावाहनविसर्जने ॥ १६३ ॥
सिद्धैकरूपके बाल्यं तारुण्यं वृद्धतामपि ।
अवस्थाभेदसंबंधं मय्येवारोपयंत्यहो ॥ १६४ ॥
अद्वैतेऽपि मयि द्वैतमकर्तरि च कर्तृताम् ।

अभोक्तरि च भोक्तृत्वं यथेच्छं प्रवदंत्यपि ॥ १६५ ॥
कुलहीने कुलारोपं शाश्वते मृतिकल्पनम् ।
सर्वहृत्स्थे कल्पयंति शत्रुमित्रादिभावनाम् ॥ १६६ ॥

एवं स्वानंदाभिरामेऽप्यनेकसुखकामिताम् ।
अखिलव्यापकं चापि ब्रुवते चैकदेशिकम् ॥ १६७ ॥
तथैव सर्वात्मानं मां कचिदेकस्य वैरिणम् ।
अन्यस्य मित्रमिति च वृथा जल्पंत्यनेकधा ॥ १६८ ॥
किं बहुक्तया मानवानां क्षुद्रान्धर्माननेकशः ।
मय्यर्पयंति मौढ्येन विपरीतधियस्तु ते ॥ १६९ ॥

प्रतिमां पुरतो दृष्ट्वा तत्र भक्त्या भजंति माम् ।
भग्नामालोच्य तूर्णं तां संत्यजंति जलाशये ॥ १७० ॥
एवं मनुष्यधर्मान्मय्यारोप्य स्थूलबुद्धयः ।
तेषां तथाविधं ज्ञानं स्याज्ज्ञानस्यान्धकारकम् ॥ १७१ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

जन्म तेषां भवेन्मोघं यथा वृष्टिमृते घनाः ।
दृश्या मृगजलोद्भूतास्तरंगा दूरतो यथा ॥ १७२ ॥
मृत्तिकानिर्मिता ह्यश्वा, भूपा गारुडदर्शिताः ।
किंवा गंधर्वनगराकारो मिथ्यैव भासते ॥ १७३ ॥
ऊर्ध्वे शाल्मलिवृक्षेऽपि नांतःकाष्ठं बहिः फलम् ।
अजागलस्तनास्तद्वन्निष्फला एव केवलम् ॥ १७४ ॥
यथा शाल्मलिवृक्षस्य त्याज्यमुत्पद्यते फलम् ।
धिङ्‍ मूर्खजीवितं तद्वद्धिक्कर्मापि च तस्य यत् ॥ १७५ ॥
यत्तेन पठितं कीरशनारिकेलविनाशवत् ।
किंवा मुक्ताफलं दिव्यमंधहस्तेऽर्पितं यथा ॥ १७६ ॥
तेषामधीतं शास्त्रादि कुमारीकरशस्त्रवत् ।
यथाऽधमाद्दतो मंत्रः सबीजोऽपि निरर्थकः ॥ १७७ ॥

पार्थ तेषां ज्ञानजातं तथैवाचरणादिकम् ।
शुद्धचित्तविहीनानां व्यर्थं भवति सर्वशः ॥ १७८ ॥
उक्ता सा राक्षसी माया सद्बुद्धिं ग्रसति क्षणात् ।
तथैव सद्विवेकादि सा नाशयति मूलतः ॥ १७९ ॥
एवं मायाग्रहग्रस्तांश्चिताक्रांता निरंतरम् ।
तमोगुणमुखे चैते पतिताः संति केवलम् ॥ १८० ॥
या चैवाशारयलालायां हिंसाजिह्वां युनक्त्यपि ।
असंतोषमांसखंडांश्चर्वयत्यविवेकतः ॥ १८१ ॥
याऽनर्थकर्णपर्यंतमोष्ठौ लेढुं बहिर्गता ।
प्रमादपर्वतस्यारात्कंदरा इव संति याः ॥ १८२ ॥
संति यस्या द्वेषदंष्ट्रा विवेकं चूर्णयंति ताः ।
आवृणोति स्थूलबुद्धीनस्थीनि त्वगिव स्वयम् ॥ १८३ ॥
एवं प्रकृतिराक्षस्याः पतंति अतिवक्त्रके ।
ते भ्रांतिकुंडपतिता निमज्जंत्येव संततम् ॥ १८४ ॥
अज्ञानकूपे मग्नानां न विचारबलं क्वचित् ।
ब्रुडितानां तथा तेषां वार्तापि श्रूयते न च ॥ १८५ ॥
अस्त्वियं निष्फला वार्ता किं कार्यो मुखदूषिका ।
व्यर्थं वाणी क्लेशिता स्यान्मास्तु तद्वर्णनं मुहुः ॥ १८६ ॥
श्रीकृष्णेनैवमुक्ते तु पार्थश्चोमित्यवीकथत् ।
कृष्णोऽवोचत्साधुकथां शृणु वाचः सुखप्रदाम् ॥ १८७ ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

भूत्वाऽहं क्षेत्रसंन्यासी पवित्रमनसां नृणाम् ।
सविधे स्वापकालेऽपि वैराग्यं यत्र तिष्ठति ॥ १८८ ॥
अस्त्येषां ब्रह्मजिज्ञासा धर्मो राज्यं करोत्यपि ।
विवेकस्याश्रयीभूतं मनो येषां निरंतरम् ॥ १८९ ॥
गंगास्नानेन ये पूतास्तृप्ताश्च ब्रह्मभोजनात् ।
ये शांतिरूपवृक्षस्य निरूढा नवपल्लवाः ॥ १९० ॥

ये मोक्षस्यांकुरीभूता ये स्तंभा धैर्यमंडपे।
येऽप्यानंदाब्धिपानीयपूर्णाः कुंभा इव स्थिताः ॥ १९१ ॥
येषां च प्रबला भक्तिर्मुक्तिं त्यजति दूरतः।
येषां कर्मस्वविरतं नीतिर्जागर्ति धार्मिकी ॥ १९२ ॥
येषामवयवा नित्यं शांत्यलंकारमंडिताः।
अपि सर्वव्यापकं मामाच्छादयति यन्मनः ॥ १९३ ॥
एवंभूता महात्मानः सत्त्वयुग्दैवसागराः।
यावद्दृष्टं वस्तुमात्रं मद्रूपं भावयंति ये ॥ १९४ ॥
ततः संवर्धितप्रेम्णा महात्मानो भजंति माम्।
परं तेषां मनोधर्मे द्वैतस्पर्शो न विद्यते ॥ १९५ ॥
एवं पांडव मद्रूपा भक्ताः कुर्वंति सेवनम्।
अथ तेषां चमत्कारं वच्मि त्वमवधारय ॥ १९६ ॥

सततं कीर्तयंतो मां यतंतश्च दृढव्रताः।
नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

मत्कीर्तनस्य नटनात्प्रायश्चित्तं न शिष्यते।
मनसः संयमात्प्रायः पापनाम न दृश्यते ॥ १९७ ॥
यमादीन्विकलान्कृत्वा त्याक्त्वा तीर्थादरं तथा।
व्यवहारांस्तथा याम्यान्सदा कुर्वंति कुंठितान् ॥ १९८ ॥
यमः कं यमयेयेति, दमो ब्रूते जयामि कम्।
तीर्थानि कं पावयामो यत्र दोषो न विद्यते ॥ १९९ ॥
मन्नामकीर्तनं त्वेवं विश्वदुःखहरं स्मृतम्।
महासुखेनैव पूर्णं तूर्णं स्यादखिलं जगत् ॥ २०० ॥
विनोदयं प्रकाशंते ह्यमराश्चाऽमृतं विना।
योगैर्विनापि कुर्वंति प्रत्यक्षं मोक्षदर्शनम् ॥ २०१ ॥
येषां तुल्यो नृपो रंको मन्यंते न पृथुं लघुम्।
जगत्यानंदभुवनं सर्वेषां तुल्यमेव हि ॥ २०२ ॥
केचिद्गच्छंति वैकुंठं मोक्षो यैः सुलभः कृतः।

नामसंकीर्तनाधारात्पाविताश्चाखिला जनाः ॥ २०३ ॥
तेजसा सूर्यसंकाशा, भानुमानस्तमेति हि ।
चंद्रः पर्वणि पूर्णः स्यादिमे पूर्णा निरंतरम् ॥ २०४ ॥
नौपम्यमेषां मेघस्य स वर्षास्वेव वर्षति ।
न कश्चिदुपमापात्रं कृपासिंहाश्च मे स्मृताः ॥ २०५ ॥
सहस्रजन्मपुण्येन वाचि नाम पतेत्कचित् ।
अखंडं नाम तत्तेषां मुखे नृत्यति सर्वदा ॥ २०६ ॥
नाहं लभेयं वैकुंठे न तथा सूर्यमंडले ।
न योगिनां मानसानि शश्वत्तिष्ठामि भारत ॥ २०७ ॥
मन्मार्गेणमदर्थं चेत्प्रसंगेन कचित्तदा ।
मन्नामगर्जनं यत्र तत्रैव निवसाम्यहम् ॥ २०८ ॥
कीर्तने रमणात्तेषां देशकालादिविस्मृतिः ।
कीर्तनस्य सुखेनैव स्वात्मन्येव रताः सदा ॥ २०९ ॥
कृष्ण विष्णो हरे रामेत्येवं गायनतत्पराः ।
आत्मानात्मविवेकस्य चर्चां कुर्वत्यनारतम् ॥ २१० ॥
अस्तिवदं पार्थ जानीहि केऽप्यटंति चराचरे ।
गायंतो मद्गुणगणान्संसारे निःस्पृहाः सदा ॥ २११ ॥
तथा पार्थ शृणुष्वेदं पंचप्राणानपि स्वयम् ।
जयंति सह चित्तेन प्रकारैर्बहुभिश्च ते ॥ २१२ ॥
यमादिभिर्बहिर्वृत्त्या ह्यंतर्वज्रासनोद्यमात् ।
नित्यं प्राणायामयाणान्ये मुंचंति दिवानिशम् ॥ २१३ ॥
कुंडलिन्याः प्रकाशेन मनःप्राणबलेन च ।
जयंति ब्रह्मरंध्रस्यामृतकुल्यामयत्नतः ॥ २१४ ॥
प्रत्याहाराद्विक्रमेण विकारान्सपरिच्छदान् ।
जित्वेंद्रियाणि बध्नंति स्वांतःकरणपंजरे ॥ २१५ ॥
तावद्धीरा धारणाभ्याः पंचतत्त्वानि चैकतः ।
कुर्वंति तावदिच्छायाः प्राप्नोति चतुरंगिणी ॥ २१६ ॥
ततो जयजयारावैर्ध्वजो ध्यानस्य गर्जति ।

एकाग्रतायाः साम्राज्यं शोभामाप्नोति वै तदा ॥ २१७ ॥
समाधिवैभवं पूर्णं तथात्मानुभवासनम् ।
पट्टाभिषेकः साम्राज्ये ब्रह्मवाक्यैः प्रजायते ॥ २१८ ॥
पार्थ मद्भजनं त्वेवमत्यंतं कठिनं किल ।
शृणुष्वान्यं प्रकारं ते कथयामि समासतः ॥ २१९ ॥
तिर्यंचः सरलाश्चापि विस्तृतास्तंतवोऽपरे ।
तद्वन्मां सर्वगं सृष्टौ जानंति न मदन्यथा ॥ २२० ॥
यावद्ब्रह्माणमारभ्याऽखिलं यन्मक्षिकावधि ।
तदंतर्वर्ति दृश्यं च मत्स्वरूपं विदंति ते ॥ २२१ ॥
स्थूलं सूक्ष्मं न ब्रुवते न सजीवं विजीवकम् ।
मत्वा मद्रूपमखिलं दृष्ट्वैव प्रणमंति च ॥ २२२ ॥
विस्मृत्य श्रेष्ठतां स्वस्य योग्यायोग्यं च लक्षणम् ।
अखिलप्राणिमात्रेभ्यो नमस्कुर्वंत्यहर्निशम् ॥ २२३ ॥
ऊर्ध्वस्थानादधोभागे गच्छत्येव यथा जलम् ।
तथोच्चान्नीचपर्यंतं स्वभावात्प्रणमंति ते ॥ २२४ ॥
फलपूर्णा तरोः शाखा नम्रीभूता भवेद्भुवि ।
एवं जगत्प्रणामार्थं शिरः कुर्वंत्यधः सदा ॥ २२५ ॥
सदैव गर्वरहिता येषां सम्पद्विनीतता ।
जयजयेति मंत्रेण सर्वस्वं चार्पयंति माम् ॥ २२६ ॥
त्यक्तमानाभिमानाश्च मत्स्वरूपं गताः सदा ।
सर्वैश्चैवं मद्भजने भ्रमंति च निरंतरम् ॥ २२७ ॥
एवं श्रेष्ठा भक्तिरपि प्रोक्ता त्वां प्रत्यशेषतः ।
भजंति ज्ञानयज्ञेन पार्थ वच्मि शृणुष्व तान् ॥ २२८ ॥
तथापि पद्धतिं तेषां ज्ञास्यसि त्वं यथातथम् ।
एकदा सा विस्तरेण पार्थ प्रोक्ता पुरैव ते ॥ २२९ ॥
तदा प्रोक्तं पांडवेन देव सत्यं श्रुता मया ।
परंतु दैवात्संप्राप्ते पीयूषे कः कहेदलम् ॥ २३० ॥

---

१ चतुर्थाध्यायस्य त्रयस्त्रिंशात्पद्यात्.

पार्थस्यैवं वचः श्रुत्वा ज्ञात्वा श्रवणलालसाम् ।
श्रीकृष्णोऽतः समाधाय प्रसन्नः सन्नुवाच तम् ॥ २३१ ॥
धन्यस्त्वमसि कौंतेय भवदास्थावलोकनात् ।
पुनरुक्तिरयुक्तापि प्रब्रवीमि तवाग्रतः ॥ २३२ ॥
श्रीकृष्ण किमिदं ब्रूषे येयं चंद्रस्य चंद्रिका ।
न केवलं चकोरार्थं जगदर्थं प्रकाशते ॥ २३३ ॥
तथापि निजतृप्त्यर्थं चकोरश्चंद्रमीक्षते ।
तथाहं प्रार्थयामि त्वां कृपासिंधुर्यतो भवान् ॥ २३४ ॥
मेघस्य महती शक्तिर्विश्वदुःखशमक्षमा ।
तन्महार्घ्यमानेन चातकतृट् कियत्यसौ ॥ २३५ ॥
स्वल्पतोयार्थमपि यद्गंगायाः प्राप्यते तटे ।
तथा महत्या लक्ष्म्या वा स्वेच्छायाः पूरको हरिः ॥ २३६ ॥
कृष्णः प्रोवाच पार्थाऽलं संतुष्टं हृदयं मम ।
त्वत्कृतायाः स्तुतेरत्र नैवावश्यकता मम ॥ २३७ ॥
सावधानः शृणोषीति तदेवोत्साहयत्यहो ।
एवं संमानयन्पार्थं श्रीकृष्णः पुनरुक्तवान् ॥ २३८ ॥

ज्ञानयज्ञेन चाप्यन्ये यजंतो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

शृणुष्व त्वं ज्ञानयज्ञं पंचभूतानि मंडपः ।
यज्ञस्तंभस्तु संकल्पः पशुर्जीवेशयोर्भिदा ॥ २३९ ॥
गुणाश्च पंचभूतानामिंद्रिय-प्राणपंचकम् ।
इदमेवोपकरणं स्वाज्ञानं यद्धविर्घृतम् ॥ २४० ॥
मनोबुद्धी उभे कुंडे ज्ञानाग्नी दीप्यतो यतः ।
समत्वं यच्च चित्तस्य सैवोक्ता यज्ञवेदिका ॥ २४१ ॥
विवेकशक्तिकौशल्यं विद्धि मंत्राननेकशः ।
शांतिश्च स्रुक्स्रुवौ पार्थ जीवो यज्ञस्य कारकः ॥ २४२ ॥
जीवोऽनुभवपात्रैश्च विवेकात्मकमंत्रकैः ।

ज्ञानरूपाग्निहोत्रेण नाशयत्युभयोर्भिदाम् ॥ २४३ ॥
तदाऽज्ञानस्य लोपः स्यात्कर्तृयज्ञौ च नश्यतः ।
जीवस्याऽपृथग्ज्ञानं ब्रह्मात्मैक्यरसे शुभम् ॥ २४४ ॥
तदा भूतानि विषयाश्चेंद्रियाणि पृथङ् नहि ।
ब्रह्मरूपः स्वयं भूत्वा जानात्येकं स चाखिलम् ॥ २४५ ॥
स्वप्ने यद्विविधं सैन्यमहमेकस्तदाऽभवम् ।
इत्थं जागरिते कोऽपि यदि ब्रूयात्तथैव तत् ॥ २४६ ॥
स्वामी सेनाऽखिलाऽसत्या ह्येक एवास्मि निश्चितम् ।
यस्यैवं भासते तस्य विश्वं स्यादेकमेव हि ॥ २४७ ॥
जीवोऽहमित्यस्मरणं स्याद्ब्रह्म तृणावधि ।
ऐक्ययज्ञेन यजतां ब्रह्मरूपमिदं जगत् ॥ २४८ ॥
तदनादौ जगत्यस्मिन्भिन्नाः प्रकृतयस्त्विमाः ।
तासां च नामरूपाणि संति पार्थ पृथक्पृथक् ॥ २४९ ॥
एवं दृष्ट्वापि भिन्नत्वमैक्यज्ञानं न नश्यति ।
यद्यप्यवयवा भिन्नास्तथाप्येकं शरीरकम् ॥ २५० ॥
शाखानां विविधत्वेऽपि तरुरेको विराजते ।
सविता त्वेक एवास्ति किरणास्तु सहस्रशः ॥ २५१ ॥
यद्यपि व्यक्तयोऽनंता भिन्नप्रकृतिनामकाः ।
तथापि सर्वभूतेषु जानंत्येकमवस्थितम् ॥ २५२ ॥
एवं ज्ञात्वापि भिन्नत्वं ज्ञानयज्ञं चरंति ये ।
ज्ञानिनस्तेऽपि मंतव्या भिन्नभावतिरस्कृतेः ॥ २५३ ॥
यदा यदा यत्र यत्र यद्यत्पश्यंति सर्वतः ।
तत्तन्मद्व्यतिरिक्तं हि नैव पश्यंति किंचन ॥ २५४ ॥
जलोत्थो बुद्बुदो यद्वज्जल एव विराजते ।
स नाशावसरे भूयो जलमध्ये विलीयते ॥ २५५ ॥
वातोत्थानां भूकणानां पृथिवीत्वं न गच्छति ।
पतिता यदि ते भूयः पृथ्व्यामेव समासते ॥ २५६ ॥
एवं केनापि भावेन यत्तद्भवतु वा न वा ।

यत्सर्वं नाहमेवेति येषा भवति भावना ॥ २५७ ॥
यावन्मम व्यापकत्व तेषामनुभवो महान् ।
जानतोऽनतरूप मा वर्तते निश्वभावत ॥ २५८ ॥
यथा चैद सूर्यबिंबमखिलाना दृशो पुर ।
भाति तद्वदिमे नित्य विश्वस्य पुरत स्थिता ॥ २५९ ॥
पाडवैषा भावनाया नातर्भावो यदि स्त्वया ।
वायुर्यथैव गगने व्याप्य पूर्णोऽस्ति सर्वत ॥ २६० ॥
एव चाह यथा पूर्णस्तेषा भक्तिश्च तादृशी ।
तेषामकरणेऽपि स्यात्सहज भजन मम ॥ २६१ ॥
सर्वगोऽह यत पार्थ घ्य जहात्युपासनाम् ।
यथार्थज्ञानहीना ये तेषा प्राप्यो नचास्म्यहम् ॥ २६२ ॥
विहित ज्ञानयज्ञ ये कुर्वते भजन मम ।
एव चोपासकास्तुभ्य कथिता वर्तनादिभि ॥ २६३ ॥
कृतानि सर्वकर्माणि याति मा सर्वतोमुखे ।
मूढा मा न विजानति तेषा प्राप्यो नचास्म्यहम् ॥ २६४ ॥

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥

तज्ज्ञानस्योदये जाते तत्र वेदोऽहमेव च ।
वेदप्रोक्त विधान च यज्ञोऽपि स्वयमस्म्यहम् ॥ २६५ ॥
कर्मणश्च तथा तस्माद्यथासागो मखो भवेत् ।
स यज्ञोऽप्यहमेवेति विद्धि पार्थ यथार्थत ॥ २६६ ॥
तथा स्वाहा स्वधा चाह सोमवल्ल्यप्यह शुचि ।
अहमाज्य च समिधो मत्राश्चाहुतयोऽप्यहम् ॥ २६७ ॥
ऋत्विजो हवनस्थान मद्रूपश्च हुताशन ।
होमद्रव्याणि सर्वाणि तान्यह विद्धि पाडव ॥ २६८ ॥

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्य पवित्रमोंकार ऋक् साम यजुरेव च ॥ १७ ॥

अष्टप्रकृतिसंगेऽस्य सा प्रसूतेऽखिलं जगत् ।
स श्रीरंगः पृथापुत्र सर्वस्यास्यास्म्यहं पिता ॥ २६९ ॥
अर्धनारीश्वरो यद्वत्स एव स्त्री पुमानपि ।
तथा चराचरस्यास्य माता चाहं न संशयः ॥ २७० ॥
यत्रेदं तिष्ठति जगदायुर्वृद्धिर्यतोऽस्ति हि ।
तत्सर्वं मद्दते नैव द्वितीयं चास्ति पांडव ॥ २७१ ॥
प्रकृतिः पुरुषश्चेति द्वंद्वं समभवद्यतः ।
स सर्वशक्तिभुवनेऽप्यहमस्मि पितामहः ॥ २७२ ॥
अर्जुनेमे ज्ञानमार्गा यत्र संमीलिताः सह ।
चतुर्वेदाश्च गर्जंतो यं वेद्यं कथयंत्यपि ॥ २७३ ॥
अभूद्यत्र मतैक्यं च शास्त्राणां मित्रता मिथः ।
भ्रांतज्ञानानि चैकत्वार्थं पवित्रं ब्रुवंति हि ॥ २७४ ॥
ब्रह्मबीजांकुरा ये वै चतुर्वाचां च मंदिरम् ।
एवंभूतो य ॐकारः सोऽहं मात्रात्रयात्मकः ॥ २७५ ॥
ॐकारस्योदरादेव अ-उ-मेत्यक्षरत्रयम् ।
समभूत्सह वेदांस्त्रीन्समादायैव पांडव ॥ २७६ ॥
ऋग्-यजुः-सामत्रितयं वेदानामस्म्यहं किल ।
श्रुतेः परंपरैवेयं कृष्णः प्रोवाच सादरम् ॥ २७७ ॥

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

प्रकृत्यंतःसमाविष्टमिदं विश्वं चराचरम् ।
विश्रान्त्यर्थं याति यत्र तदहं स्थानमुत्तमम् ॥ २७८ ॥
प्रकृतिं जीवयति यस्तया जगदर्चाक्लृपत् ।
तस्याः संबंधयोगेन स भुनक्ति गुणत्रयम् ॥ २७९ ॥
स विश्वलक्ष्म्या भर्ता च विद्धि निश्चयतोऽस्म्यहम् ।
तथा जगत्त्रयस्यापि मुख्यः परिवृढोऽस्म्यहम् ॥ २८० ॥
स्थैर्येण वियता खेयं चंचलत्वेन वायुना ।

अग्निना दाहकत्वेन मेघेनापि च वर्षता ॥ २८१ ॥
महीध्रैर्न स्थलं स्याज्यं नोल्लंघ्यं सिंधुना तटम् ।
भूतभारं वहति भूरेतत्सर्वं ममाज्ञया ॥ २८२ ॥
मत्प्रेरितो वदेद्वेदः सूर्यस्तपति मद्भये ।
मत्प्रयुक्तश्चलेत्प्राणो यो जगच्चालकः स्मृतः ॥ २८३ ॥
ममैव चाज्ञया कालो भूतानि ग्रसति स्वयम् ।
एवं यस्याज्ञया पार्थ सर्वे व्यवहरंति हि ॥ २८४ ॥
एवंविधः समर्थः स जगन्नाथोऽहमेव च ।
सर्वत्राकाशवत्साक्षी सोऽहमस्मीति विद्धि भोः ॥ २८५ ॥
सर्वथा यो जगद्व्यापी संभृतो नामरूपयोः ।
तयोः संरक्षको यश्च विद्धि सोऽस्मि नचापरः ॥ २८६ ॥
यथा जले तरंगाश्च तरंगेषु जलं यथा ।
मयि सर्वमहं तत्र जीवनं जगतोऽस्म्यहम् ॥ २८७ ॥
मय्यनन्यं तारयामि जन्ममृत्युभयात्सदा ।
शरणागतरक्षार्थमेक एव करोम्यहम् ॥ २८८ ॥
प्रकृतेस्तु गुणैर्भिन्नैरहमेकोऽप्यनेकधा ।
प्राणरूपैर्जीवमात्रेष्वावासो विद्यते मम ॥ २८९ ॥
अयं सिंधुस्तटाको वेत्यविचिंत्य रविर्यथा ।
प्रतिबिंबत्यहं तद्वद्व्याप्तस्त्रैलोक्यजीवगः ॥ २९० ॥
तथाऽहमर्जुनाधारस्त्रैलोक्यस्यास्य सर्वशः ।
उत्पत्तिस्थितिनाशानामस्म्यहं मूलकारणम् ॥ २९१ ॥
बीजोत्था वृक्षशाखाद्याः संलीयंते मुहुस्ततः ।
विश्वोत्पत्तिश्च संकल्पात्संकल्पे सा विलीयते ॥ २९२ ॥
बीजरूपं तथाऽव्यक्तं संकल्पवासनान्वितम् ।
यत्र तिष्ठति कल्पांते नूनं तत्स्थानमप्यहम् ॥ २९३ ॥
निराकारस्थित्युदये नामरूपे प्रणश्यतः ।
जातिभेदाश्च लुप्यंते वर्णव्यक्तिसमन्विताः ॥ २९४ ॥
पुनः सृष्ट्युत्पत्तिकाले ससंकल्पाश्च वासनाः ।

गृह्यास्तेऽमरा यत्र पार्थ तत्स्थानमप्यहम् ॥ २९५ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

तपामि सूर्यरूपेण तदेतच्छोषयाम्यहम् ।
इंद्ररूपेण वर्षेयं पुनर्जलभृतिस्तदा ॥ २९६ ॥
अग्निना ज्वलिते काष्ठे काष्ठं यात्यग्निरूपताम् ।
तद्धंता च घात्यश्च पार्थाऽहमुभयात्मकः ॥ २९७ ॥
मृत्युरूपात्मकं यद्यत्तत्तन्मद्रूपमेव च ।
अविनाशि च यत्तच्च तत्सर्वमहमस्म्यहो ॥ २९८ ॥
बहुनाऽत्र किमुक्तेन तात्पर्यार्थं ब्रवीमि ते ।
सद्वाऽसद्वाऽखिलं दृश्यं विद्धि पार्थाऽहमेव तत् ॥ २९९ ॥
यत्राहं नास्मि तत्पार्थ स्थानं नैवास्ति कुत्रचित् ।
तथापि मां न जानंति जीवा दुर्दैवयोगतः ॥ ३०० ॥
शुष्यंति किं जलमृते तरंगाः, किरणा रवेः ।
किमदृश्या विना दीपं, तद्वज्जानंति मां न ते ॥ ३०१ ॥
अंतर्बहिरिदं विश्वमोतप्रोतं भृतं मया ।
दैवो नास्तीति वल्गंति तेषां दुर्दैवमेव तत् ॥ ३०२ ॥
सुधाकूपेऽपि पतितास्ततो निर्गंतुमुद्यताः ।
पयमज्ञानपूर्णाश्चेत्किं कार्यं तत्र तान्प्रति ॥ ३०३ ॥
ग्रासमात्राच्चलाभार्थमंधो धावति सर्वतः ।
आंध्येनाग्रे स्थितं रत्नं प्रत्यस्यति पदा यथा ॥ ३०४ ॥
ज्ञानसंगं विना तद्वद्भूयादन्धसमा स्थितिः ।
ज्ञानं विना च कर्माणि कृतान्यप्यफलानि हि ॥ ३०५ ॥
गरुडस्याप्यंधतायां सपक्षत्वेऽपि किं भवेत् ।
तथैव ज्ञानहीनत्वे कर्मायासा निरर्थकाः ॥ ३०६ ॥

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते ।

ते पुण्यमासाद्य सुरेंद्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥

इदं पांडव जानीहि ये वर्णाश्रमधर्मिणः ।
विधिमार्गरताश्चैव प्रमाणीभूय च स्थिताः ॥ ३०७ ॥
सानंदाः कुर्वते यज्ञं चालयंति सुराः शिरः ।
फलेन सहिता यज्ञास्तिष्ठंत्यपि च तत्पुरः ॥ ३०८ ॥
ततश्च सोमपातारो यज्ञरूपा भवंति ते ।
पुण्यनाम्नाऽप्यर्जयंति पापमेव पृथासुत ॥ ३०९ ॥
विज्ञाय वेदत्रितयं कृत्वा यज्ञान्शतावधि ।
मत्प्राप्तिं ये तिरस्कृत्य स्वर्गमिच्छंति केवलम् ॥ ३१० ॥
स्थिता कल्पतरोर्मूले भिक्षापात्रकरा नराः ।
यथा धावन्ति भैक्ष्यार्थं धनुर्धर तथैव ते ॥ ३११ ॥
शतयज्ञैश्च मामिष्ट्वा कुर्वंति स्वर्गचिंतनम् ।
कथं वाच्यमिदं पुण्यं पार्थ पातकमेव तत् ॥ ३१२ ॥
स्वर्गप्राप्तिं मद्विना ते ह्यृयते पुण्यमार्गकम् ।
ततः स्यातां जन्ममृत्यू हानिं तां मन्यते बुधाः ॥ ३१३ ॥
निचारे नारकाद्दुःखाद्वरं स्वर्गसुखं खलु ।
अखंडानंदसंपूर्णमेकं मद्रूपमेव हि ॥ ३१४ ॥
मद्दर्शनायागमने पंथानौ द्वौ प्रकीर्तितौ ।
स्वर्गश्च नरकश्चेति चौरमार्गौ न संशयः ॥ ३१५ ॥
पापयुक्सुकृतात्स्वर्गो नरकः पापपातकात् ।
नियता येन मत्प्राप्तिस्तच्छुद्धं पुण्यमीरितम् ॥ ३१६ ॥
अपि ये संति मद्रूपाः कर्मभिश्चैव वंचिताः ।
तत्कर्म पुण्यं ब्रुवतां जिह्वा गलति नैव किम् ॥ ३१७ ॥
अस्त्विदं प्रकृते विद्धि यज्ञैरिष्ट्वापि मां ततः ।
वांछंति स्वर्गजान्भोगानाचीर्णैः सर्वकर्मभिः ॥ ३१८ ॥
ते मामंतरिताः संतः पापयुक्सुकृतं ततः ।
संपाद्य च महोत्साहाद्यांति स्वर्गमराध्वतम् ॥ ३१९ ॥

यत्रामरत्वमेवोच्चैः सिंहासनमुदीरितम् ।
ऐरावतसमो हस्ती नगरी चामरावती ॥ ३२० ॥
भांडाराण्यष्टसिद्धीनां पीयूषस्यापि संचयाः ।
कुलानि कामधेनूनां संचरंति ततस्ततः ॥ ३२१ ॥
देवसंचारपंथानो नानारत्नैर्विनिर्मिताः ।
आरामाः कल्पवृक्षाणां मनोरंजनकारकाः ॥ ३२२ ॥
यत्र गायंति गंधर्वा नृत्यंत्यप्सरसस्तथा ।
उर्वश्याद्या विलासिन्यो यत्र संति मनोहराः ॥ ३२३ ॥
अनंगः शयनेष्वास्ते गृहान्संमार्ष्टि चंद्रमाः ।
सेवार्थं सेवका यत्र तूर्णं धावंति वायुवत् ॥ ३२४ ॥
द्विजा गीष्पतिमुख्याश्च शक्राशीरर्थमुद्यताः ।
स्तुतिपाठोद्यता देवाः संत्यनंताः समंततः ॥ ३२५ ॥
मंडयंतो नृपपदं लोकपाला यतस्ततः ।
उच्चैःश्रवःसमा वेगे धावंत्यश्ववरा यतः ॥ ३२६ ॥
एवमैश्वर्यसंपन्नं स्वर्गाख्यं सुखभाजनम् ।
पुण्यसंचयपर्यंतमुपभुंजंति याज्ञिकाः ॥ ३२७ ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशंति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभंते ॥ २१ ॥

ते सर्वे सुकृते क्षीणे भ्रष्टैश्वर्यास्ततः क्षणात् ।
पुनरेव प्रपद्यंते मृत्युलोकं यथा पुरा ॥ ३२८ ॥
सर्वस्वे हस्तगे वेश्या द्रव्यदं त्यजति क्षणात् ।
तथैवैषां याज्ञिकानां दुर्दशां किमु वर्णये ॥ ३२९ ॥
प्रसंगेऽपि च मां त्यक्त्वा पुण्यात्स्वर्गं गता अपि ।
नामरत्वं स्थिरं तेषां मृत्युलोकं पतंत्यधः ॥ ३३० ॥
मातुर्गर्भे पुनर्गत्वा विष्ठानिकटवर्तिनि ।

नवमासं पुनर्जन्म धृत्वा मरणमाप्नुयुः ॥ ३३१ ॥
स्वप्ने लब्धो निधिर्नूनं जागरे नैव दृश्यते ।
याज्ञिकानां स्वर्गसौख्यं पार्थ विद्धि तथैव तत् ॥ ३३२ ॥
यदि वेदार्थसंपन्नो मदज्ञानाद्वृथा गतः ।
तुषनिर्वापणे यद्वत्कणाभावाद्वृथा श्रमः ॥ ३३३ ॥
व्यर्थास्तथा मद्रहिता धर्मास्त्रैविद्यजा अपि ।
अतो मां तत्त्वतो ज्ञात्वाऽऽनंदं भुंक्ष्व यथेप्सितम् ॥ ३३४ ॥

अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

स्वचित्तं सर्वभावेन मह्यं यैरर्पितं सदा ।
तान्रक्षामि, स्वरक्षार्थं गर्भः प्रयतते किमु ॥ ३३५ ॥
एवं येषां मद्रहितं कर्तव्यं नैव विद्यते ।
मदर्थमेव देहोऽपि रक्षितो यैः प्रयत्नतः ॥ ३३६ ॥
एवमेकाग्रचित्तेन कुर्वते मदुपासनाम् ।
तथैव तानहं शश्वत्पार्थ रक्षामि सर्वतः ॥ ३३७ ॥
यदा त ऐक्यभावेन भक्तिमार्गमुपाश्रिताः ।
ततः प्रभृत्येव सदा तेषां चिंतां वहाम्यहम् ॥ ३३८ ॥
मनसा ध्रियते यत्तैस्तत्सर्वं करवाण्यहम् ।
बालाननुद्भूतपक्षान्यथा रक्षति पक्षिणी ॥ ३३९ ॥
क्षुत्तृडार्तापि यन्माताऽपत्यार्थं यतते यथा ।
तथाऽस्मदर्थं यततां सर्वं संपादयाम्यहम् ॥ ३४० ॥
मत्प्राप्तिवासनां तेषां पूरयामि कुतूहलात् ।
मत्सेवायै प्रयततां दद्यां प्रेम तदंतरे ॥ ३४१ ॥
एवं मनसि यं भावं धारयंति पुनश्च ते ।
तं सर्वं पूरयित्वाथ दत्तं रक्षामि सर्वदा ॥ ३४२ ॥
एवमेकांतभक्तानां योगक्षेमं वहाम्यहम् ।
तथा तत्कांक्षितानां च सदा पूरयिताप्यहम् ॥ ३४३ ॥

येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः ।
तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥ २३ ॥

अज्ञात्वा व्यापकं मां ये पारंपर्यमुपाश्रिताः ।
अग्नींद्रसूर्यसोमादीन्मद्यात्यर्थं भजंति च ॥ ३४४ ॥
मामेवाप्नोति तत्सर्वमखिलव्यापकत्वतः ।
परं नासावृजुर्मार्गो भजनं सरलं न च ॥ ३४५ ॥
एकस्यैव तु बीजस्य वृक्षशाखादयो न किम् ।
मूलेनैव जलादानमंतस्तत्तर्पयत्यलम् ॥ ३४६ ॥
एकस्यैव तु देहस्यापींद्रियाणि पृथग्दशा ।
तैः पृथग्विषयादानं तदेकत्रैव गच्छति ॥ ३४७ ॥
कृत्वोत्तमं स्वयंपाकं किमु कर्णे समर्पयेत् ।
किंवा सुगंधिपुष्पाणि वर्ध्यायान्नेत्रदेशतः ॥ ३४८ ॥
मुखेन भक्षयेदन्नं गंधं नासिकया हरेत् ।
तद्वन्मद्भावनां कृत्वा मम पूजां समाचरेत् ॥ ३४९ ॥
अज्ञात्वा यत्तु भजनं ज्ञेयं निष्कारणं हि तत् ।
कर्मनेत्रसमं ज्ञानं तन्निर्दोषमपेक्षितम् ॥ ३५० ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥ २४ ॥

पश्य पंडुसुतान्यच्च यज्ञद्रव्यादिभुक्परः ।
वस्तुतः को मदन्योऽस्ति सर्वकर्मफलप्रदः ॥ ३५१ ॥
यज्ञस्यादौ तथा चांतेऽप्यहमेकोऽस्मि तत्त्वतः ।
परं दुर्बुद्धयस्त्यक्त्वा मामिंद्रादीनुपासते ॥ ३५२ ॥
यद्देवपित्रुद्देशेन गंगायां गांगमर्प्यते ।
मामर्प्यते मदीयं च तत्र भिन्ना हि भावना ॥ ३५३ ॥
एवंविधा जनाः सर्वे मार्गाद्भ्रष्टा भवंति हि ।
यत्रास्था विद्यते तेषां यांति तत्रैव ते मुहुः ॥ ३५४ ॥

यांति देवव्रता देवान् पितॄन्यांति पितृव्रताः ।
भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि माम् २५

ये कायवाङ्मनोभिश्च देवानेव भजंति हि ।
देहत्यागानंतरं ते देवा एव भवंति च ॥ ३५५ ॥
पितॄणां प्रीणनार्थाय पितॄनेव यजंति ये ।
आयुषोंऽते तु ते सर्वे पितृलोकं प्रयांति च ॥ ३५६ ॥
क्षुद्रदेवोपासकाश्च जारणे मारणे रताः ।
भूतप्रेतपिशाचादीन्साधुयंत्यनिशं तु ये ॥ ३५७ ॥
तेषां देहावसाने तु पिशाचत्वमवाप्यते ।
स्ववासनानुसारेण प्राप्नुवंति फलान्यपि ॥ ३५८ ॥
ये मां पश्यंति नेत्राभ्यां नाम शृण्वंति कर्णतः ।
मां चिंतयंति चित्तेन गुणगानं मुखेन हि ॥ ३५९ ॥
सर्वांगैश्च सर्वत्र मां नमंति सदैव च ।
मदुद्देशेन कुर्वंति दानपुण्यादिकं च यत् ॥ ३६० ॥
येषां मदर्थेऽध्ययनमंतर्यागं च मत्कृते ।
यैः स्वीयं सर्वमायुष्यं मदर्थं व्ययितं किल ॥ ३६१ ॥
हरेर्यशो यर्थयेमेत्येवं चेषामहंकृतिः ।
येषां चित्ते तु जगति लोभो मत्प्राप्तये किल ॥ ३६२ ॥
मत्प्राप्त्यर्थं सकामा ये प्रेम्णोऽर्थं प्रेमकारकाः ।
मोहिता मम मोहेन लौकिकं नैव जानते ॥ ३६३ ॥
येषां मत्प्राप्तये शास्त्रं मंत्राश्चापि मदाप्तये ।
येषां व्यापारमात्रं च सर्वं मद्भजनाय हि ॥ ३६४ ॥
एवंभूता मृतेः पूर्वमपि मद्रूपतां गताः ।
ते मृत्योः परमन्यत्र क गच्छेयुर्वदस्व माम् ॥ ३६५ ॥
ये हि मद्भजने लग्नाः सायुज्यपदमागताः ।
मह्यं यैः सर्वभावेन कृतं स्वस्य समर्पणम् ॥ ३६६ ॥
आत्मत्वमंतरा नान्यदस्ति मत्प्रेमकारणम् ।
उपचाराः केऽपि चान्ये न मद्दर्शनकारकाः ॥ ३६७ ॥
शास्त्रमानी न जानाति न धन्यो धन्यमान्यपि ।
मनुते मुक्तमात्मानं स बद्धः सर्वथैव हि ॥ ३६८ ॥

कृत्वापि यज्ञदानादि चित्ते गर्वं वहंति ये ।
मत्प्राप्तिविषये तेषां तृणतुल्यैव योग्यता ॥ ३६९ ॥

पार्थ ज्ञानबलेनापि को वेदेभ्योऽधिको भवेत् ।
शेषादप्यधिकः को वा वक्तास्ति भुवनत्रये ॥ ३७० ॥

शेषोऽभूच्छयनं यस्य मूकाऽभूद्वेत्यपि श्रुतिः ।
सनकाद्या मुनिजना भ्रांता आसंश्च यत्कृते ॥ ३७१ ॥

शंकरादधिकः कोऽपि तपस्विषु न विद्यते ।
सोऽपि पादोदकं यस्य मूर्ध्ना वहति सादरम् ॥ ३७२ ॥

किंवा लक्ष्म्या अपि महान्श्रीमत्त्वेनास्ति कश्चन ।
यद्गृहे ऋद्धिसिद्ध्याद्या दास्यं कुर्वंति नित्यशः ॥ ३७३ ॥

ता गृहाणि च बध्नंति नाम्नाऽमरपुराणि च ।
तेषु शक्रादयो देवाश्चित्राणीव विभांति हि ॥ ३७४ ॥

तद्गृहाणां भंजने तु शक्राद्या यांति रंकताम् ।
द्रास्यः पश्यंति यान्वृक्षान्यांति ते कल्पवृक्षताम् ॥ ३७५ ॥

यस्या दास्यः प्रभावाढ्या नंदंति सततं गृहे ।
सा लक्ष्मीः पट्टमहिषी मानं नाप्नोति यत्पदे ॥ ३७६ ॥

मानमुज्झित्य सा पार्थ मनोभावेन सेवया ।
आस्ते यत्पादसेवार्थं पात्रीभूय यदंतिके ॥ ३७७ ॥

अतस्त्यक्त्वा स्वं महत्त्वं विद्यागर्वं च सर्वशः ।
विहरेच्च विलीनः सन्मत्प्राप्तिः स्यात्तदैव हि ॥ ३७८ ॥

सूर्यतेजःप्रकाशाग्रे चंद्रो निस्तेजतां व्रजेत् ।
तत्र प्रकाशाभिमानः खद्योतस्य वृथैव सः ॥ ३७९ ॥

यत्र श्रीवैभवं न्यूनमपूर्णं धूर्जटेस्तपः ।
अज्ञानी पातकी तत्र मां ज्ञास्यति कथं हि सः ॥ ३८० ॥

त्यक्त्वा देहाभिमानं स्वं श्लाघ्यैर्निजगुणैः सह ।
सद्वैश्वर्यमदेनापि कुर्यादारातिकं मम ॥ ३८१ ॥

---

१ वेदो नेति नेति=इदं न इदं नेत्येव कथयति.

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

उल्लासाद्दृढभावेन मत्समर्पणहेतुना ।
कस्यापि फलवृक्षस्य भक्त्यार्पयति यः फलम् ॥ ३८२ ॥
तद्यावन्मत्पुरो यातं न यातं तावदेव हि ।
कराभ्यां प्रतिगृह्णामि तत्सप्रसवबंधनम् ॥ ३८३ ॥
पश्य यद्भक्तिभावेन पुष्पं केनचिदर्पितम् ।
मुखे क्षिपामि सद्यस्तदाघ्रेयं नासयापि हि ॥ ३८४ ॥
अस्त्विदं पुष्पविषये, वृक्षपत्रमपि प्रियम् ।
कोमलं वाथ शुष्कं वा महीरुहसमुद्भवम् ॥ ३८५ ॥
अपि चेद्भक्त्युपहृतं मत्वाऽमृतसमं हि तत् ।
भुक्त्वा तृप्तिं प्रयास्यामि यथा पीयूषभक्षणात् ॥ ३८६ ॥
यदा हि तरुपत्राणि दुष्प्राप्याणि भवंति चेत् ।
तदा पार्थ न दुष्प्राप्यं जलं भवति कुत्रचित् ॥ ३८७ ॥
तत्तु सर्वत्र सुलभं लभ्यते च विना धनम् ।
जलमप्यर्पयेत्प्रेम्णा भक्तिभावपुरःसरम् ॥ ३८८ ॥
महांति तेन वैकुंठान्मंदिराण्यर्पितानि मे ।
कौस्तुभादधिकान्मन्येऽलंकारांस्तेन चार्पितान् ॥ ३८९ ॥
तेन दुग्धनिभा शय्या क्षीराब्धिसदृशी शुभा ।
भक्त्या मनोहरा स्वच्छा मामुद्दिश्य विनिर्मिता ॥ ३९० ॥
कर्पूरागरजा गंधा मेरुतुल्याः समर्पिताः ।
नीराजनेन मन्येऽहं सूर्यमालेव दर्शिता ॥ ३९१ ॥
सुपर्णवद्वाहनानि, कल्पद्रूपवनानि च ।
कामधेनुसमूहाश्च मन्ये तेन समर्पिताः ॥ ३९२ ॥
माधुर्येऽमृतकल्पानि सुपक्वान्यनेकशः ।
भक्त्यार्पितं च पानीयमुभयं तुल्यतोपदम् ॥ ३९३ ॥
अधिकं किमु वक्तव्यं सुदाम्नः पृथुका मया ।
भक्षिता ग्रंथिमुन्मुच्य तच्छ्रुतं न किमु त्वया ॥ ३९४ ॥

भक्तिमान्यदि चेत्कोऽपि सुमहानथ वा लघुः ।
प्रेमपात्रं मम भवेद्यतो भक्तिभुगस्म्यहम् ॥ ३९५ ॥
निमित्तमात्रं तद्भक्तेः पत्रं पुष्पं फलं जलम् ।
केवलं भक्तिरेवास्ति मद्भक्तेः साधनं महत् ॥ ३९६ ॥

तस्मादर्जुन यत्नेन भक्तिबुद्धिमुपाश्रय ।
स्वमनोमंदिरे भक्त्या मत्स्मृतिः सुस्थिरा भवेत् ॥ ३९७ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

करोषि यानि कर्माणि तथा भोगान्भुनक्षि यान् ।
यज्ञादिभिर्यजसि यत्स्विष्टैर्बहुधनव्ययात् ॥ ३९८ ॥
ददासि पात्रे दानानि सेवकेभ्यश्च वेतनम् ।
तपांसि यान्यर्जयसि शरीरक्लेशतः सदा ॥ ३९९ ॥
किंवा सहजया गत्या यद्यत्कर्म करोषि हि ।
तत्तत्सर्वं भक्तिपूर्वं सर्वदा मह्यमर्पय ॥ ४०० ॥
मुक्त्वाऽभिमानं विस्मृत्य स्वकर्तृत्वं तथा हृदि ।
निष्कामः सत्कर्मजातं निःशेषं मां समर्पय ॥ ४०१ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

यथाऽग्निदग्धबीजानि नांकुराय भवंति हि ।
मय्यर्पणे सद्सतां कर्मणां स्यात्फलं न ते ॥ ४०२ ॥
सदोषं यदि कर्म स्यात्कारणं सुखदुःखयोः ।
तथासति पुनर्जन्म भूयादर्जुन तत्कृते ॥ ४०३ ॥
तथापि जन्ममरणे न भवेतां मदर्पणे ।
जन्माभावे तत्समुत्थाः क्लेशाः स्युश्च तिरोहिताः ॥ ४०४ ॥
तदर्थं कर्मसंन्यासयुक्तिः पार्थ मयोदिता ।
तां समाचर सत्वरं वृथा कालं न हापय ॥ ४०५ ॥

देहबंधोऽनया न स्यात्सुखदुःखाब्धिमज्जनम् ।
प्रविष्टे सहजं सौख्यं सर्वानंदमये मयि ॥ ४०६ ॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

कथं त्वमिति चेद्रूपे सर्वभूतेष्वहं समः ।
अहंममेति भेदस्तु मय्यर्जुन न विद्यते ॥ ४०७ ॥
ज्ञात्वैवं मामहंकारबीजमुद्ध्वंसयंति ये ।
कृत्वाऽर्पयंति भक्त्या मामंतःकरणपूर्वकम् ॥ ४०८ ॥
देहस्था इव दृश्यंते मां प्राप्ता अपि सर्वदा ।
वसामि हृदये तेषां नित्यं मद्भावितात्मनाम् ॥ ४०९ ॥
बीजाद्वटतरोर्जातः शाखापल्लवविस्तरः ।
सूक्ष्मबीजे स प्रविष्टश्चास्ते व्याप्य तदंतरम् ॥ ४१० ॥
एवं परस्परं भेदा ह्युभयोर्नाममात्रतः ।
कृते सूक्ष्मविचारे तु सोऽहमस्म्येक एव हि ॥ ४११ ॥
आहृत्य भूषणान्यन्याद्यथा तैः स्वांगभूषणम् ।
तथोदासीनभावेन त्यागिनां देहधारणम् ॥ ४१२ ॥
वायुसंगाद्गते गंधे तद्धीनं कुसुमं यथा ।
एवमायुर्दायशेषाद्भुवने संति केवलम् ॥ ४१३ ॥
किंतु तेषामहंकारो भक्तिमालंब्य सर्वतः ।
मद्रूपे प्रविशत्येव निश्चयेनार्जुन स्वतः ॥ ४१४ ॥

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥**

एवं प्रेम्णैव भजतां न पुनर्जन्मसंभवः ।
धनुर्धर स कोऽप्यस्तु जात्योच्चो नीच एव वा ॥ ४१५ ॥
किं च तेषामाचरणमस्ति पापमयं किल ।
तथापि भक्तिमार्गे यैर्देहो व्यापारितः सदा ॥ ४१६ ॥

अंतकाले मतिर्यद्वद्वृत्तिर्भवति तादृशी ।
अतोऽते भक्तिमालंब्य शरीरं स्थापितं तु यैः ॥ ४१७ ॥
यः पूर्वं सुदुराचारोऽप्यंते सर्वोत्तमांतरः ।
ब्रुडितोऽपि महापूरे जीवन्याति ततो बहिः ॥ ४१८ ॥
तीरागतस्य ब्रुडनं सुपूरेऽपि वृथैव तत् ।
तद्वत्पापं लयं याति पार्थांते भक्तिकारणात् ॥ ४१९ ॥
पापयुक्तोऽपि यः पश्चात्तापतीर्थे निमज्जति ।
याति मां शरणं चापि स्वांतःकरणभावतः ॥ ४२० ॥
कुलं तस्य पवित्रं च निष्कलंकं तथा यशः ।
जन्मनः सार्थकं शश्वदपि तेनैव साधितम् ॥ ४२१ ॥
अधीताः सकला विद्यास्तपांस्याचरितानि च ।
तद्वदष्टांगयोगोऽपि सभ्यस्तस्तेन दुष्करः ॥ ४२२ ॥
अस्त्वयं बहुविस्तारो मय्यास्थां यदुपागतः ।
सर्वकर्मभ्य एवासावुत्तीर्णोऽभवदंततः ॥ ४२३ ॥
एकनिष्ठापेटिकायां न्यस्य बुद्धिमनःस्थितिम् ।
मयि तामथ मंजूषां यः स्थापयति संततम् ॥ ४२४ ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ।
कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

सोऽपि कालांतरेणैव याति मद्रूपतामिति ।
न मन्येथाः कदाऽपि त्वममृतस्थो म्रियेत किम् ॥ ४२५ ॥
यावन्नोदयते सूर्यस्तावद्रात्रिं प्रचक्षते ।
भक्तिमुज्झित्य कुर्वंति तन्महापातकं न किम् ॥ ४२६ ॥
तस्माद्यस्य मनोभूमौ मत्सांनिध्यं भवेद्यदा ।
तदैव मत्स्वरूपं स पार्थ प्राप्नोति तत्त्वतः ॥ ४२७ ॥
दीपात्प्रज्वालिते दीपे पौर्वापर्यं न दृश्यते ।
सदा मद्भजकोऽप्येवं प्राप्नोति ममरूपताम् ॥ ४२८ ॥
मत्स्थितिं शांतिकांत्यादि लभतेऽखंडमेव सः ।
किं बहुनया जगत्यस्मिन्स मज्जीवेन जीवति ॥ ४२९ ॥

पार्थ किं पुनरुक्तेन वारंवारं तवांतिके ।
यस्य मत्प्राप्तिरिष्टा स्यात्स भक्तिं विसरेन्नहि ॥ ४३० ॥
कुलीनत्वं नचाचेष्टं वंशशुद्धिश्च नेप्सिता ।
नच व्युत्पत्तिहृव्यासः क्वचित्स्वल्पोऽप्यपेक्षितः ॥ ४३१ ॥
नापेक्षा रूपवयसोर्न संपत्तिरपेक्षिता ।
मयि भक्तिर्न चेत्सर्वं सदपि व्यर्थमेव तत् ॥ ४३२ ॥
कणहीनाश्च मंजर्यो व्यर्थं जाता ह्यनेकशः ।
जनशून्यं च नगरं व्यर्थं यद्यपि सुंदरम् ॥ ४३३ ॥
किंवा सरोवरं शुष्कं, योगो वा दुःखिनोर्वने ।
अथवा सुमहान्वृक्षो वंध्यपुष्पैः प्रफुल्लितः ॥ ४३४ ॥
तथैव वैभवं व्यर्थं कुलजात्यादिकं वृथा ।
गतप्राणो यथा देहः सांगोपांगोऽपि निष्फलः ॥ ४३५ ॥
तथा मद्भक्तिरहितं जीवितं व्यर्थमेव हि ।
पाषाणाः स्थूलसूक्ष्माश्च पृथिव्यां प्रसृता यथा ॥ ४३६ ॥
घनापि हिवरच्छाया निषिद्धा सज्जनैर्यथा ।
तथैवाखिलपुण्यानि भक्तिहीनं त्यजंत्यहो ॥ ४३७ ॥
पारिभद्रः फलाढ्यश्चेद्वायसानां समृद्धिदः ।
तथा मद्भक्तिहीनोऽपि पापानामाश्रयो भवेत् ॥ ४३८ ॥
खर्परं षड्रसैः पूर्णं स्थापितं चेच्चतुष्पथे ।
तच्छुनामुपभोगाय भवेन्नैव च सद्व्यये ॥ ४३९ ॥
तथा भक्तिविहीनो यः पुण्यं स्वप्नेऽपि नाचरेत् ।
देहावसानपर्यंतं दुःखान्येव भुनक्ति सः ॥ ४४० ॥
अतो नहि कुलापेक्षा यदि जात्यांत्यजोऽपि हि ।
अथवा पशुदेहोऽस्तु मद्भक्त्या श्रेष्ठ एव सः ॥ ४४१ ॥
नक्राक्रांतगजेंद्रेणाऽकारि मत्स्मरणं यदा ।
विमुच्य नीतः सारूप्यं न पशुत्वात्तिरस्कृतः ॥ ४४२ ॥

---

१ दुष्टकंटकिवृक्षछाया.

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ॥३२॥

ये नामग्रहणायोग्यजातिजा अधमाधमाः ।
पापयोनिसमुद्भूताः पार्थ लोकबहिष्कृताः ॥ ४४३ ॥
ये नीचाः पापयोनित्वाज्ज्ञानेऽपि प्रस्तरा इव ।
परं येषां दृढा भक्तिर्मय्यस्ति सततं शुभा ॥ ४४४ ॥
मन्नामगायनं चक्रे दृष्ट्या मद्रूपदर्शनम् ।
यन्मनो मद्विरहितं संकल्पं वेत्ति न क्वचित् ॥ ४४५ ॥
श्रोत्राभ्यां श्रूयते येस्तु सदा मद्गुणकीर्तनम् ।
सर्वांगे भूषणं दिव्यं मम सेवैव यैः कृता ॥ ४४६ ॥
यद्बुद्धेर्विषयो नान्यो ज्ञानं वापि न मामृते ।
एवंस्थितास्ते जीवंति, मरणं यांति चान्यथा ॥ ४४७ ॥
एवमेव च सर्वस्वं भावो मय्येव रक्षितः ।
यज्जीविताय चाधारोऽप्यहमेवास्मि पांडव ॥ ४४८ ॥
ते पापयोनिसंभूताः शास्त्राध्ययनवर्जिताः ।
तुलनायां न ते मत्तो न्यूनाः क्वापि भवंति हि ॥ ४४९ ॥
दैत्यैर्भक्तिबलेनैव देवाः सर्वे पराजिताः ।
अहं प्रह्लादभक्तयर्थं नारसिंहोऽभवं तदा ॥ ४५० ॥
प्रह्लादेन मदर्थं हि सोढाः संकटराशयः ।
तस्य चारित्रगानेन मद्देयमपि लभ्यते ॥ ४५१ ॥
दैत्योद्भवस्यापि तस्य शक्रादीनां न योग्यता ।
ममाऽपदयकता भक्तेर्जातिर्न हि विचार्यते ॥ ४५२ ॥
राजमुद्रांकितं चर्मखंडं भवति रिक्थवत् ।
सर्वे पदार्थास्तेनैव लभ्यंते पार्थ भूतले ॥ ४५३ ॥
मुद्रां विना सुवर्णं वा रौप्यं वा न क्षमं क्वचित् ।
मुद्रांकिताश्चर्मणस्तु व्यवहारा भवंति हि ॥ ४५४ ॥
अतः पार्थ मनोबुद्धी भक्तिमुद्रांकिते यदि ।
तदैव सत्कुलीनत्वं सर्वज्ञत्वं च राजते ॥ ४५५ ॥

अतो वर्णकुलादीनि संति निष्कारणानि हि ।
निःसीमभक्तियोगेन सर्वं भवति सार्थकम् ॥ ४५६ ॥
कथमप्यस्तु सा भक्तिस्तया मत्प्राप्तिमृच्छति ।
पार्थ पूर्वस्थितिस्तस्य कथमप्यस्तु देहिनः ॥ ४५७ ॥
स्रोतसां क्षुद्रता तावद्यावन्नो यांति जाह्नवीम् ।
गंगाजले प्रविष्टानि तद्रूपाणि भवंति हि ॥ ४५८ ॥
खदिरश्चंदनो वेति तावच्छेदेन तिष्ठतः ।
यावत्प्रदीपिते वह्नौ न पतेतां कथंचन ॥ ४५९ ॥
यावन्मद्रूपता पार्थ न लब्धा देहिनां क्वचित् ।
तावत्क्षत्रियविट्शूद्रा विभक्ता जातयः पृथक् ॥ ४६० ॥
यथाब्धौ लवणं यातमब्धित्वं याति तत्क्षणम् ।
तथा मद्भक्तियुक्तानां न जातिव्यक्तिकल्पनम् ॥ ४६१ ॥
नद्यो नदाश्च दृश्यंते पूर्वपश्चाद्वहा इव ।
सिंधोः समागमात्पूर्वं पार्थक्यं न ततः परम् ॥ ४६२ ॥
येनकेन प्रकारेण चित्ते मयि समर्पिते ।
अनायासेन मद्रूपप्राप्तिर्भवति निश्चितम् ॥ ४६३ ॥
स्पर्शस्य छेदनमिषाल्लोहस्पर्शो यदा भवेत् ।
तत्क्षणे स्वर्णतां याति लोहं सर्वात्मना यथा ॥ ४६४ ॥
पश्य मत्प्रेमव्याजेन गोप्यश्चित्तार्पणान्मयि ।
निःसीमभक्त्या सारूप्यं न प्राप्ताः किं धनंजय ॥ ४६५ ॥
कंसो भीत्या चिंतयन्मामगच्छन्मत्स्वरूपताम् ।
शिशुपालादयो वैरभावान्मोक्षं गताः किल ॥ ४६६ ॥
यादवाः पांडवाश्चापि सुहृत्त्वान्मुक्तिमागताः ।
देवकीवसुदेवाद्या मोक्षं याता ममत्वतः ॥ ४६७ ॥
शुकः सनत्कुमाराश्च ध्रुवोऽक्रूरश्च नारदः ।
भक्त्यैव सर्वे मां प्राप्ता अभवन्मोक्षभागिनः ॥ ४६८ ॥
गोप्यः काममिषाच्चाभवन्कंसो भीत्याऽनुचिंतनात् ।
शिशुपालादयो वैरात्सायुज्यं प्रापिता मया ॥ ४६९ ॥

भक्त्या वाथ विरक्त्या वा वैरेण विषयेच्छया ।
यथा केनापि मां प्राप्तास्तेषां निर्वाणदोऽस्म्यहम् ॥ ४७० ॥
पार्थ प्राप्तुं मत्स्वरूपं मार्गाणां न्यूनता नहि ।
येनकेनापि मार्गेण मां प्राप्तो मोक्षभाग्भवेत् ॥ ४७१ ॥
जातौ कस्यांचिदुद्भूय भजनं वैरमेव वा ।
चिंतनं वैरभावेन कृतं भजनमेव तत् ॥ ४७२ ॥
यथाकयापि वा रीत्या शरणं मां प्रयाति चेत् ।
तदा मद्रूपता तस्य हस्ते प्राप्नोति तत्त्वतः ॥ ४७३ ॥
जन्मास्तु पापयोन्यां वा वैश्यः शूद्रोऽङ्गनाऽस्तु वा ।
निःसंशयं मद्भजनाद्याति मद्धाम शाश्वतम् ॥ ४७४ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥

सर्ववर्णेषु ये श्रेष्ठाः स्वर्गलोकाधिकारिणः ।
आकरा मंत्रविद्यानां मूर्धन्या ब्राह्मणाः स्मृताः ॥ ४७५ ॥
ये भूचरा भूमिदेवास्तपोमूर्तय एव च ।
तीर्थानामपि माहात्म्यमुद्भूतं येभ्य एव तु ॥ ४७६ ॥
संति येषु सदा वेदा वेदप्रावरणं च ये ।
कृपादृष्टिवशाद्येषां कल्याणं वर्धते सदा ॥ ४७७ ॥
यदास्थारूपतोयेन वृद्धिः सत्कर्मणां भवेत् ।
येषां सदिच्छासामर्थ्यात्सत्यं ह्यस्ति जीवितम् ॥ ४७८ ॥
येषां च वैदिकैः शब्दैरग्नेरायुष्यवर्धनम् ।
समुद्रेणात्मनस्तोयं येभ्यः प्रेमार्थमर्पितम् ॥ ४७९ ॥
मयाऽपसारिता लक्ष्मीः कौस्तुभोऽपि धृतः करे ।
येषां पादरजःप्राप्त्यै हृदयं पुरतः कृतम् ॥ ४८० ॥
ब्राह्मणांघ्र्युत्थितं लक्ष्म धृतं वक्षःस्थले मया ।
गांभीर्यस्यैव रक्षार्थं पार्थान्यन्नास्ति कारणम् ॥ ४८१ ॥
कालाग्निरुद्रमदनं येषां क्रोधः प्रजायते ।
प्रसादेऽसिलसिद्धीनां लभ्याः स्युः सर्वसिद्धयः ॥ ४८२ ॥

एव हि ब्राह्मणाः पूज्याः स्वतः सुरतरावय ।
मज्जया याति मद्रूपमिति किं तत्समर्थनात् ॥ ४८३ ॥
चंदनागानिलस्पर्शान्निंबो भवति चंदनः ।
निर्जीवोऽपि स देवानां याति मूर्धसु सर्वदा ॥ ४८४ ॥
स चंदनः क्व तत्र न यायाद्घर्षणक्षमः ।
न यायादिति येनापि कथितं चेत्स्पृशेन्न तत् ॥ ४८५ ॥
विपद्राहस्य शांतिः स्यादिति निश्चित्य सादरम् ।
शंकरेण कलार्धोऽपि ललाटे विधृतो विधुः ॥ ४८६ ॥
चंद्रादप्यधिकः शांतो गधाढ्यश्च विशेषतः ।
किंतु सर्वांगलेपाय चंदनो नैति योग्यताम् ॥ ४८७ ॥
क्रिया रथ्योदकानीति गंगां गत्वा तदाश्रयात् ।
सहजं सागरं याति गंगाया कान्यया गतिः ॥ ४८८ ॥
तस्माद्येषां गतिर्मानदाता संरक्षिताप्यहम् ।
राजर्षीणां ब्राह्मणानामपि निर्वाणदोऽस्म्यहम् ॥ ४८९ ॥
नावं प्राप्य शतच्छिद्रां कथं पारं गमिष्यति ।
दृष्ट्वा शलाकावृष्टिं चाऽनावृतांगः कथं व्रजेत् ॥ ४९० ॥
स्थाने पतति पाषाणे चर्मणाच्छाद्यते न किम् ।
रोगार्त्तस्तिर्यग्पथार्थं मद्धर्मान्यं नहीष्यते ॥ ४९१ ॥
धनवर्षा व्याप्नुवति ततोऽन्यत्र व्रजेत किम् ।
एव तु गदसंसारे प्राप्तः किं न भजेद्धि माम् ॥ ४९२ ॥
मा विषाद कुरु पार्थ सुखसंसारिको भवेत् ।
पार्थ संसारपर्यासा संपत्तिः किं गृहे स्थिता ॥ ४९३ ॥
क्रिया विशो महाजन तारुण्यं ज्ञानमेव वा ।
एमेर निश्चयेनेति को विश्वसिमिहार्हति ॥ ४९४ ॥
सर्वं भोग्यपदार्थांस्तु देहसौख्याय सति ते ।
परिणामे देहमपि कालो ग्रसति निश्चितम् ॥ ४९५ ॥
यत्र दुःखस्य पूर्णं मृत्योराशिश्च निश्चिता ।
मृत्युलोकस्य।पि च दाक्यात्समुपस्थितम् ॥ ४९६ ॥

जीवतः सौख्यदं पार्थ विद्यते किमु तत्र वै ।
निरग्निशीतलांगाराध्मानाद्दीपो भवेत्कथम् ॥ ४९७ ॥
विषकंदं संप्रपीड्य रसं निष्काश्य यत्नतः ।
मत्वाऽमृतं स पीतश्चामरत्वार्थं मृतिप्रदः ॥ ४९८ ॥
तद्वद्वैषयिकं सौख्यमत्यंतं दुःखदं हि तत् ।
तदेव मूर्खाः सेवंते सुखभावेन तेऽनिशम् ॥ ४९९ ॥
अथवा स्वशिरश्छित्त्वा पादव्याधिप्रशांतये ।
यत्नीयाचरणे तद्वन्मर्त्यलोकसुखं स्मृतम् ॥ ५०० ॥
मृत्युलोके सौख्यवार्ता श्रुता केन कदापि किम् ।
अंगारकंटशय्यायां सुखस्वापवदेव सा ॥ ५०१ ॥
यत्र चंद्रः क्षयग्रस्त उदयोऽस्तार्थमेव हि ।
प्रगृह्य सुखरूपं हि दुःखं क्लिश्नाति चाखिलान् ॥ ५०२ ॥
मंगलस्यांकुरोत्पत्तौ प्राप्तमेवास्त्यमंगलम् ।
उदरांतः प्रविश्यापि कालो गर्भं जिघांसति ॥ ५०३ ॥
यद्वंतं संसारचिंतां यमदूता नयंत्यपि ।
क्व नीताः केन मार्गेणेत्याद्यपि श्रूयते न च ॥ ५०४ ॥
शोधितेष्वपि मार्गेषु पुनरागमनं दृश्यते ।
पुराणेषु कथाः प्रोक्ता मृतानामेव सर्वशः ॥ ५०५ ॥
तत्रस्यक्षणिकत्वस्य यथावद्वर्णनाय हि ।
आयुर्मानं ब्रह्मणोऽपि न पर्याप्तं भवेत्खलु ॥ ५०६ ॥
मृत्युलोकस्थितावेवं जीवान्स्वस्थतया स्थितान् ।
आलोच्य हृदये मूलमाश्चर्यं जायते मम ॥ ५०७ ॥
इहामुत्रसुखार्थाय न व्ययंति कपर्दिकाम् ।
त्यजंति कोटिशस्तत्र हानिः स्याद्यत्र सर्वथा ॥ ५०८ ॥
रक्तं विषयभोगेषु सुखिनं ब्रुवते जनाः ।
अत्यंतलोभग्रस्तं च मन्यंते ज्ञानिनं खलु ॥ ५०९ ॥
स्वल्पशिष्टायुषः पुंसो लुप्तबुद्धिबलस्य च ।
नमस्कुर्वंति चरणौ वृद्धोऽयमिति मानिनः ॥ ५१० ॥

अपत्यं वर्धते यावत्तावन्नृत्यंति हर्षतः ।
वृथायुर्गच्छतीत्यस्य कः करोति विचारणाम् ॥ ५११ ॥
जन्मनो दिनमारभ्य कालो गच्छत्यहर्दिवम् ।
तमज्ञात्वैव कुर्वंति वर्धापनमहोत्सवम् ॥ ५१२ ॥
न सहंते मृत्युशब्दमाक्रंदंति तथा मृतौ ।
गणयंति गतायुर्न कश्चिन्मूढाः कदापि हि ॥ ५१३ ॥
सर्पगीर्णोऽपि मंडूको जिह्वयात्त्येव मक्षिकाः ।
एवं जना वर्धयंति तृष्णां वैषयिकीं मुहुः ॥ ५१४ ॥
कष्टं कष्टं मृत्युलोके वैपरीत्यं हि सर्वथा ।
यद्यप्यत्र त्वया जन्म प्राप्तमस्ति धनंजय ॥ ५१५ ॥
अतश्चेमं विमुच्य त्वं तूर्णं मद्भक्तिमाश्रय ।
तेन यास्यसि पार्थ त्वमक्षयं मामकं पदम् ॥ ५१६ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

स्वांते कुरुष्व मद्रूपं प्रेम्णा मद्भजनं कुरु ।
सर्वत्र व्यापकं मत्वा मामेवैकं नमस्कुरु ॥ ५१७ ॥
मय्येव चित्तमाधाय संकल्पा येन भर्जिताः ।
शुद्धः स एव मंतव्यो मदर्थं यजकश्च सः ॥ ५१८ ॥
एवं मद्योगसंपन्नो मद्रूपं प्राप्नुयात्तदा ।
इदं हृदंतर्गूढस्थं कथयामि तवार्जुन ॥ ५१९ ॥
सर्वेभ्योऽपि यदेतावन्मया गूढं सुरक्षितम् ।
तत्त्वं यदि गृह्णासि सुखी भवसि तत्क्षणम् ॥ ५२० ॥
यदुकवान्भक्तकामकल्पद्रुमेघकांतिभृत् ।
आत्मारामः परब्रह्म तदेवोवाच संजयः ॥ ५२१ ॥
तच्छ्रुत्वा धृतराष्ट्रस्तु प्रसंगे विषमेऽपि हि ।
महापूरे महिषवन्निर्विकारमनाः स्थितः ॥ ५२२ ॥
संजयश्चालय मूर्धानं प्रोवाचाऽमृतवर्पणम् ।
प्राप्य संत्यज्य तं कश्चिद्याति ग्रामांतरं यथा ॥ ५२३ ॥

परमेवं कथं वाच्यमस्माकं प्रभुरस्त्ययम् ।
किंवा कार्यं ह्यस्य जन्मसभावश्चैवमेव हि ॥ ५२४ ॥
ममैव दैवमुदितं यद्व्यासेनात्र योजितः ।
युद्धवृत्तांतकथने जातं कल्याणमेव तत् ॥ ५२५ ॥
एवं दृढं मनः कृत्वा वृत्तं ब्रुवति संजये ।
कंठो रुद्धः समुल्लासादष्टौ भावास्तथोत्थिताः ॥ ५२६ ॥
अभून्मनश्च तल्लीनं तथा वागपि कुंठिता ।
रोमांचितमभूदंगमुद्भूताः सात्विका गुणाः ॥ ५२७ ॥
अर्धोन्मीलितनेत्राभ्यामानंदाश्रूद्गमोऽभवत् ।
अंतरानंदसंवृध्या शरीरं समकंपत ॥ ५२८ ॥
उद्भूता रोमकूपेषु सुसूक्ष्मा घर्मबिंदवः ।
तन्मुक्तामणिजालाभं जातं प्रावरणं शुभम् ॥ ५२९ ॥
एवमानंदसंदोहे ग्रहैक्यावसरेऽपि हि ।
तदा व्यासाज्ञसकार्ये विघ्नोऽयं समुपस्थितः ॥ ५३० ॥
तथापि तत्क्षणे श्रोत्रप्राप्ता श्रीकृष्णगर्जना ।
संजयोऽपि ह्वदा भूयो देहभानमुपागतः ॥ ५३१ ॥
निमृज्य नेत्रसलिलं प्रोञ्छ्य घर्मं शरीरगम् ।
प्राथयद्धृतराष्ट्रं च सादरं श्रूयतामिति ॥ ५३२ ॥
इतः कृष्णबोधबीजं ब्रूयात्स्नेहेन संजयः ।
श्रोतृभ्यस्तेन लाभः स्यादमेयाणामपि स्फुटम् ॥ ५३३ ॥
किंचिच्छ्रवणमात्रेणानंदराशौ स्थितिर्भवेत् ।
श्रोत्रेंद्रियेभ्यो दैवेन मालैवेयं समर्पिता ॥ ५३४ ॥
विभूतियोगं श्रीकृष्णो यत्पार्थाय प्रदर्शयेत् ।
शृणुध्वमवधानेनेत्येवं ज्ञानेश्वरोऽब्रवीत् ॥ ५३५ ॥

इति श्रीज्ञानदेवविरचितायां भावार्थदीपिकायां अनंतनिरूपणे नवमोऽध्यायः ॥ ९ ॥

श्लोकाः ३४ नवश्लोकाः ५३५

---

# गीर्वाणज्ञानेश्वरी

## दशमोऽध्यायः

स्पष्टज्ञानविदग्धाय प्रमेयप्रमदाय च ।
विद्यापद्मविकासाय विलासाय नमोऽस्तु ते ॥ १ ॥
संसारध्वांतसूर्यायाऽनंतवीर्योत्तमाय च ।
युवंतुर्याविलासाय गुरुवर्याय ते नमः ॥ २ ॥
कृत्स्नविश्वैकपालाय शुभरत्नाकराय च ।
साध्वरण्यचंदनाय स्वाराध्याय नमोऽस्तु ते ॥ ३ ॥
विद्वच्चकोरचंद्राय ह्यात्मानुभवभूभृते ।
श्रुतिसारसमुद्राय कामकामाय ते नमः ॥ ४ ॥
भक्तसेवनपात्राय भवेभकटनाशिने ।
जगदुत्पत्तिमूलाय नमः श्रीगुरवेऽस्तु मे ॥ ५ ॥
भवत्कृपागणपतिप्रसादाद्बालधीरपि ।
सद्विद्याढ्या निश्चयेन भवत्येव न संशयः ॥ ६ ॥
श्रीमद्गुरोरुदारा वाग्यदा दद्यादभीवरम् ।
तदा नवामृताब्धेश्चागाधतामपि वेत्ति सः ॥ ७ ॥
भवदीया प्रेमवाणी मूकं गृह्णाति चेत्करे ।
कुर्याद्वाचस्पतिसमं कविकाव्यादिकर्मसु ॥ ८ ॥
भवत्कृपादृग्यत्र स्यान्मूर्धानं वा करः स्पृशेत् ।

---

१ विदग्धश्चतुरः. २ मायारूपिणी प्रमदा=स्त्रीर्यस्य. ३ अंधकारनाशकः सूर्यः, मध्यमपदलोपी समासः. ४ अपरिमेयमुत्तमं वीर्यं यस्य. ५ तरुणतुरीयावस्थया विलासो यस्य. ६ आकरः खनिः. ७ सज्जनरूपारण्यस्थचंदनाय. ८ विदा=ज्ञानिनां हृदयमेव चकोरस्तस्य चंद्रः. ९ मन्मथस्यापि मन्मथः. १० सद्भक्तभजनयोग्याय. ११ संसाररूपगजकुंभमर्दनाय. १२ अभीष्टवरमभयवरम्.

स नरोऽपि प्रयात्येव क्षणादीश्वरतुल्यताम् ॥ ९ ॥
एवं महिम्नो माहात्म्यं वाचाहं वर्णयामि किम् ।
किं कर्तुं शक्यते सूर्यशरीरोद्वर्तनं कदा ॥ १० ॥
का मंजरी कल्पतरोः क्षीराब्धेरुपदापि का ।
कर्पूराय सुगन्धार्थमन्यद्द्रव्यं किमर्पयेत् ॥ ११ ॥
किमु लेप्यं चंदनाय पक्वान्नममृताय वा ।
आकाशादपि विस्तीर्णं किं कर्तुं शक्यते भुवि ॥ १२ ॥
तथा श्रीगुरुमाहात्म्याकलने साधनं किमु ।
अशक्यमखिलं ज्ञात्वा केवलं नौमि भक्तितः ॥ १३ ॥
प्रज्ञाबलात्प्रवृत्तश्चेद्गुरोर्माहात्म्यवर्णने ।
तन्मुक्ताफलतेजस्वीकरणोद्योगवद्भवेत् ॥ १४ ॥
किंवा सुवर्णालंकारे रौप्ययोजनवद्भि तत् ।
अतो गुरुपदोर्मूर्ध्ना नमनं भक्तितो वरम् ॥ १५ ॥
ज्ञानदेवोऽब्रवीत्स्वामिन्कृपयाऽऽलोचितोऽस्म्यहम् ।
यत्प्रयागवटोऽभूवं श्रीकृष्णार्जुनसंगमे ॥ १६ ॥
भक्त्या समाराधयते दुग्धार्थमुपमन्यवे ।
धूर्जटिः सुप्रसन्नः सन्दत्तवान्क्षीरसागरम् ॥ १७ ॥
दृष्टं ध्रुवं तपस्यंतं विलोक्यानन्यभावतः ।
वैकुंठाधिपतिः प्रादात्तस्मै ध्रुवपदं नवम् ॥ १८ ॥
ब्रह्मविद्याशिरोरत्नं शास्त्राणां विश्रमस्थलम् ।
गीताशास्त्रं तथैवेदमोवीवृत्तेन वर्णये ॥ १९ ॥
शब्दारण्ये संचरतां कर्णे नाप्नोति यत्कथा ।
सा वाकृता कल्पलता विचारफलदायिनी ॥ २० ॥
देहबुद्धिरहंकारस्था याताऽद्वैतमंदिरम् ।
मनो गीतार्थाब्धिमध्ये स्थापितं जलमंदिरे ॥ २१ ॥
इत्यगाधां देवकृतिं मद्वाणी वर्णयेत्कथम् ।
तथाप्यवोचं धैर्येण तत्क्षमस्व दयानिधे ॥ २२ ॥

---

१ ओवीति भाषायामनियताक्षरचतुष्पादवृत्तस्य व्यवहारः.

भवत्कृपाप्रसादेन गीता पूर्वार्धमादितः ।
ओवीवृत्तेन मोदेन यथावत्प्रतिपादितम् ॥ २३ ॥
प्रोक्तोऽर्जुनविषादश्च प्रथमाध्याय आदितः ।
द्वितीये सांख्यबोधश्च सभेदोऽपि निरूपितः ॥ २४ ॥
तृतीये कथितं कर्म सज्ञानं तत्तुरीयके ।
उक्तश्च पंचमेऽध्याये योगतत्त्वस्य विस्तरः ॥ २५ ॥
षष्ठे तदेव सुस्पष्टं योगासनविधेः सह ।
एकत्वं जीवशिवयोः कथं स्यादिति वर्णितम् ॥ २६ ॥
अष्टांगयोगसिद्धिश्च योगभ्रष्टगतिस्तथा ।
तत्सोपपत्तिकं सर्वं षष्ठेऽध्याये निरूपितम् ॥ २७ ॥
उपक्रमोपसंहारौ सप्तमे प्रकृतेरपि ।
चातुर्विध्यं च भक्तानां यथावदुपपादितम् ॥ २८ ॥
अष्टमे सप्तप्रश्नानां कृत्वा विस्तरतः पुरः ।
देहांतयोग्यावसरः समासेन विचारितः ॥ २९ ॥
नवमेऽपि च वेदोक्तः सर्वसारसमुच्चयः ।
य एष लक्षसंख्याके भारतेऽस्ति प्रपंचितः ॥ ३० ॥
सत्र सप्तशतश्लोकैर्गीताशास्त्रमुदाहृतम् ।
श्रीकृष्णार्जुनसंवादरूपं वर्येति सर्वतः ॥ ३१ ॥
ज्ञातुं नवमतत्त्वार्थं भीतः पार्थोऽवधारितुम् ।
अतोऽभिमानं तस्याहं संधरेयं वृथा कुतः ॥ ३२ ॥
शर्करा वा गुडो वापि चैकसाद्रवतो रसात् ।
तथापि माधुरीस्वाद उभयोर्भिन्न एव हि ॥ ३३ ॥
ज्ञात्वा ब्रह्म वदंत्येकेऽन्ये स्थानं दर्शयंति च ।
केचिद्विचारसमये ब्रह्मीभूता भवंत्यपि ॥ ३४ ॥
गीताध्यायास्तथा सर्वे ब्रह्मज्ञानभृता अपि ।
नवमोऽवर्णनीयोऽत्र वर्णितः सा भवत्कृपा ॥ ३५ ॥
शाटी प्रकाशितैकस्य प्रतिसृष्टिं व्यधात्परः ।
कृत्वैकोऽब्धौ सेतुबंधं स्वीयं सैन्यमतारयत् ॥ ३६ ॥

खेऽगच्छदेकः सूर्यार्थमन्यः सिंधुं पपौ क्षणात् ।
मत्तो मूकात्तथैवात्र ब्रह्मवादोऽपि कारितः ॥ ३७ ॥
अस्त्विदं रणभूमौ ते युद्धं कर्तुमुपस्थिताः ।
आसीत्प्रकारोऽनुपमो रामरावणयोरिव ॥ ३८ ॥
कृष्णबोधो नवमगो नवाध्यायवदेव हि ।
यो गीतार्थं विजानाति स सिद्धांतयितुं क्षमः ॥ ३९ ॥
एवमेते नवाध्याया यथामति निरूपिताः ।
उत्तरार्धमितो वच्मि गीतायाः शृणुतादरात् ॥ ४० ॥
श्रीकृष्णोऽचीकथत्पार्थं स्वा विभूतीः सविस्तरम् ।
सुध्वर गौणतः कथां तासां सुरसां वर्णयाम्यतः ॥ ४१ ॥
शांतो जीयाद्धि शृंगारं सौंदर्याद्देशभाषया ।
तेनं साहित्यशृंगारऔवीभूतं भविष्यति ॥ ४२ ॥
मूलभागः संस्कृतोऽस्ति व्याख्या प्राकृतभाषया ।
विज्ञाते चोभयोरर्थं न मूलं भासते पृथक् ॥ ४३ ॥
शरीरसौष्ठवमलंकारान्भूषयति स्वयम् ।
केन कं भूषितमिति भेदस्तत्र न दृश्यते ॥ ४४ ॥
प्राकृता वा संस्कृता वा गीतां शोभयतः समम् ।
बुद्ध्या पवित्रयैवेदं श्रोतव्यं प्रेमभावतः ॥ ४५ ॥
कस्मिंश्चिद्वादाये प्रोक्ते वृष्टिर्नवरसा भवेत् ।
चातुर्यं मन्यते तत्र स्वस्य शोभां समागताम् ॥ ४६ ॥
तथा प्राकृतलावण्यं तारुण्यमपहृत्य च ।
गीतातत्त्वं च संपूर्णं तेनेदं रचितं किल ॥ ४७ ॥
एतच्चराचरगुरुर्विज्ञचित्तचमत्कृतौ ।
कथयिष्यति यत्कृष्णस्तदेवाग्रेऽवधार्यताम् ॥ ४८ ॥
उवाच ज्ञानदेवो यदूचे कृष्णोऽर्जुनं प्रति ।
सर्वथा स्वच्चित्तवृत्तिर्योग्या श्रवणकर्मणि ॥ ४९ ॥

१ हनुमानिति ज्ञेयम्. २ अगस्त्यमुनि.. ३ मत्तः=मत्सदृशात्. ४ आर्यागीतीति छंदः प्रसिद्धम्.

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

एतावद्वर्णने दृष्टं चित्तस्थैर्यं यथा तव ।
अग्रेऽपि तद्वदेवास्तु परिपूर्णतयाऽधिकम् ॥ ५० ॥
घटे स्वल्पं जलं क्षिप्य पूर्णमालोच्य निःस्रवम् ।
ततोऽधिकं पूरयीत कथनीयं तथैव हि ॥ ५१ ॥
हस्ते दत्वा धनं कुर्याद्विश्वस्तं धनरक्षकम् ।
तथा विश्वासपात्रस्त्वं ह्यसीति सुपरीक्षितः ॥ ५२ ॥
अत्यादरेण श्रीकृष्णः पार्थमाभाष्य सादरम् ।
शैलं दृष्ट्वा मेघ इव परिपूर्णोऽभवत्तदा ॥ ५३ ॥
कृपासिंधुः समवदच्छृणु पार्थ समासतः ।
पूर्वमुक्तं पुनर्ब्रूयां दार्ढ्यार्थं भवतः किल ॥ ५४ ॥
प्रत्यब्दमुप्यते बीजं क्षेत्रे धान्यविवृद्धये ।
पुनस्तत्रैवावपने न श्रमो भाति कस्यचित् ॥ ५५ ॥
पुनः पुनस्तापितं सद्याति तेजस्वितां परम् ।
अतः सुवर्णशुद्ध्यैव यथा कुर्वन्त्यभीक्ष्णशः ॥ ५६ ॥
तद्वत्त्वय्युपकारार्थमेव नायमुपक्रमः ।
ममापि स्वार्थसिद्ध्यर्थं पार्थेमां वच्मि ते कथाम् ॥ ५७ ॥
यथाऽर्भकस्य शृंगारा न भवंत्युपकारकाः ।
मातुर्दृष्ट्यैव मुग्धाः कुरुते सैव भूषितम् ॥ ५८ ॥
तथैव तव कल्याणं संपन्नं स्याद्यथा यथा ।
तथा तथाऽस्मदानंदो द्विगुणत्वेन वर्धते ॥ ५९ ॥
अस्त्वौपचारिकमिदं त्वत्प्रेमार्थं सदा मम ।
अतः कथंचिदुक्तेऽपि त्वन्मनोऽतृप्तमेव हि ॥ ६० ॥
एतदर्थं मुहुस्तत्तत्कथितं त्वद्धितेच्छया ।
अस्त्विदं, त्वं शृणुष्वाग्रेऽप्यंतःकरणपूर्वकम् ॥ ६१ ॥
अत्युत्तमं मत्कथनं शृणु मर्मज्ञ सादरम् ।
प्राप्तं यदक्षरब्रह्म त्वदालिंगनहेतुना ॥ ६२ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

यदि पार्थ न जानासि मत्स्वरूपं यथार्थतः ।
तथा त्वत्पुरतो दृश्योऽहमेव निखिलं जगत् ॥ ६३ ॥
अत्रैव वेदोऽभून्मूको मनःप्राणाश्च पंगुलाः ।
तं मां ज्ञातुं रविशशी यातावस्तं निशां विना ॥ ६४ ॥
उदरस्थो यथा गर्भो मातुर्वेत्ति वयो नहि ।
तथेशं मां देवसंघा ज्ञातुं शक्ता न चाभवन् ॥ ६५ ॥
सिंधोरंतं जलचरा न जानंति, न मक्षिकाः ।
उल्लंघंति नभस्तद्वद्वपयोऽपि न मां विदुः ॥ ६६ ॥
कः कियान्वा कस्य वाऽहं प्रादुर्भूतः कदेति च ।
निर्णेतुमेतद्यातानि ह्यनंतानि युगान्यपि ॥ ६७ ॥
महर्षीणां च देवानां सर्वेषां प्राणिनामपि ।
यन्मूलमहमेवेति ज्ञातुं पार्थ सुदुःशकम् ॥ ६८ ॥
नगाग्रे चेज्जलं गच्छेन्मूले वृक्षाग्रमेव च ।
जगदेतन्मदुद्भूतं मां जानीयात्तदाऽर्जुन ॥ ६९ ॥
तदं त्रिलष्येत चेद्बीजं वीचिष्वब्धिः समाविशेत् ।
समाविष्टं भवेद्वापि परमाणौ चराचरम् ॥ ७० ॥
तदेवर्षिगणा देवा मत्संभूता जना अपि ।
सर्वे ज्ञातुं समर्था मां भवेयुः पार्थ तत्त्वतः ॥ ७१ ॥
एवमस्म्यहमज्ञेयस्तथापि विषयस्पृहाम् ।
त्यक्त्वा पराङ्मुखीभूय स्वेंद्रियार्थेषु सर्वशः ॥ ७२ ॥
पराङ्मुखत्वे संजाते देहाहंधीः प्रणश्यति ।
ततः स पंचभूतानां मूर्धानमधिरोहति ॥ ७३ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः [illegible] मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

एवं जाते मनःस्वास्थ्ये स्वस्य दृष्ट्यैव केवलम् ।

आत्मप्रकाशसामर्थ्यान्ममाजत्वं स पश्यति ॥ ७४ ॥
सर्वेषामनादिरस्मीह सर्वेषां परमेश्वरः ।
इति भावेन यो मत्यों जानात्यर्जुन तत्त्वतः ॥ ७५ ॥
स पाषाणेष्वपि स्पर्शो रसेष्वमृतसन्निभः ।
तद्वत्सोऽपि ममैवांशो मनुष्येष्वस्ति निश्चितम् ॥ ७६ ॥
स एवास्ति ज्ञानमूर्तिस्तदंशाश्च सुखांकुराः ।
लोके तस्मिन्मनुष्यत्वबुद्धिस्तु भ्रांतिरेव हि ॥ ७७ ॥
कदाचित्कर्पूरराशौ लग्नश्चेदंगारकोऽपि च ।
तस्मिञ्जलेऽपि पतिते कर्पूरवच्च नश्यति ॥ ७८ ॥
तथापि दृश्यते तस्य वर्तनं मनुजादिवत् ।
अपि मायाविकारस्य बाधां जानाति न कश्चित् ॥ ७९ ॥
वं मुंचति भयात्पापं सर्पनद्ध्यचंदनम् ।
तथैव सर्वे संकल्पा मां ज्ञास्यंतं त्यजंति हि ॥ ८० ॥
मां जानीयात्कथमिति ज्ञातुमिच्छसि चेद्यदि ।
मत्स्वरूपं विकारांश्च कथयामि शृणुष्व तत् ॥ ८१ ॥
भिन्नभिन्नेषु जीवेषु प्रकृत्या साम्यमागताः ।
संति सर्वा विकृतयः पार्थ सर्वत्र विस्तृताः ॥ ८२ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाऽभयमेव च ॥ ४ ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवंति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

तत्र तु प्रथमं बुद्धिस्ततो ज्ञानमनंतरम् ।
असंमोहः सहिष्णुत्वं तथा सत्येन वर्तनम् ॥ ८३ ॥
ततः शमदमौ लोके सुखदुःखे तथैव च ।
भावाभावौ मत्त एव सर्वं भवति पांडव ॥ ८४ ॥

---

१ स्पर्शमणि-स्पर्शात् लोहं सुवर्णं भवतीति संकेतः प्राचाम्.

भयं च निर्भयं चैव ह्यहिंसा समता तथा ।
तुष्टिस्तपस्तथा दानं मद्भावास्तेऽपि पांडव ॥ ८५ ॥
कीर्तिश्चैवापकीर्तिश्च भावाऽभावाः सदैव ये ।
जीवमात्रेषु दृश्यंते मज्जातानेव विद्धि तान् ॥ ८६ ॥
भिन्नभिन्ना यथा जीवा भावा भिन्नास्तथैव हि ।
तेषु जानंति मां केचिन्न जानंत्यपि केचन ॥ ८७ ॥
भासते सूर्ययोगेन प्रकाशो ध्वांतमेव वा ।
प्रकाशो हृदये भाति ध्वांतमस्तमयेऽपि च ॥ ८८ ॥
मदर्थं ज्ञानमज्ञानमुभयं कर्मणः फलम् ।
अतो भूतेषु दृश्यंते भिन्ना विकृतयः सदा ॥ ८९ ॥
मय्येवं जीवसृष्टिश्च सर्वेयं व्याप्य तिष्ठति ।
धनुर्धर विजानीहि न मत्तोऽन्यत्परायणम् ॥ ९० ॥
अस्याः सृष्टेः पालकाश्च भावा एकादश स्मृताः ।
यदाज्ञावशगा लोकास्तान्वच्मि शृणु सादरम् ॥ ९१ ॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

ये सर्वगुणसंपन्ना ज्ञानवंतो महर्षयः ।
कश्यपाद्याश्च विख्याताः पार्थ सप्तर्षयोऽपि च ॥ ९२ ॥
चतुर्दश च मन्वाद्याः स्वयंभ्वाद्याश्च तेष्वपि ।
चत्वारश्चैव मनवो देवा मुख्यतमा मताः ॥ ९३ ॥
एकादशेमे भावास्तु सृष्टिकार्यार्थमेव हि ।
मन्मनस्तः समुद्भूतास्त्वं जानीहि धनुर्धर ॥ ९४ ॥
यदा लोकव्यवस्थेयं नासीत्त्रिभुवनस्य च ।
त्वरस्थानि पंचभूतानि शांतान्यासंश्च सर्वथा ॥ ९५ ॥
तदा सप्तर्षयोऽभूवन्दिक्पालास्तैर्विनिर्मिताः ।
तेभ्योऽप्यक्षपदं दत्तं विश्वस्मिन्सर्वतोऽपि हि ॥ ९६ ॥
एकादश नृपालेषु सृष्टिस्तैरेव निर्मिता ।

सर्वोऽपि विस्तरश्चैवं त्वं ममैवेति विद्धि भोः ॥ ९७ ॥
आरंभे बीजमेवास्ति ततो वृक्षं प्रजायते ।
ततः स्कंधादिकाण्डानां विस्तारोऽपि प्रजायते ॥ ९८ ॥
ततः शाखाः सुविस्तीर्णाः प्रशाखा विस्तृतास्तथा ।
भवंति तेभ्योऽगणिताः कोमलाः पल्लवा अपि ॥ ९९ ॥
ततः पुष्पफलानि स्युर्वृक्षत्वं विस्तृतं भवेत् ।
विचारितेऽस्य मूले तु बीजमेकं हि कारणम् ॥ १०० ॥
तद्वत्पूर्वं ममास्तित्वं मत्तो जातं ततो मनः ।
मनसः सप्त मुनयश्चत्वारो मनवस्तथा ॥ १०१ ॥
तैर्निर्मिता लोकपालास्तैश्च लोकाः प्रकल्पिताः ।
तेभ्यः सर्वं प्राणिमात्राश्चोद्भूता अखिला इमे ॥ १०२ ॥
तदेवं विश्वविस्तारो विस्तृतः सोऽहमेव हि ।
श्रद्धायद्भिः सर्वमेतद्यथावदनुभूयते ॥ १०३ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

हे सुभद्रापते सर्वं मद्व्याप्ताश्च विभूतयः ।
एतेषामेव सर्वत्र व्याप्तिर्जगति वर्तते ॥ १०४ ॥
अतोऽपि निश्चितमिदं यद्ब्रह्माद्यापिपीलकम् ।
मत्तोऽन्यन्न किमप्यस्ति दृश्येषु भुवनत्रये ॥ १०५ ॥
एवं जानाति यस्तत्त्वं तस्याभूज्ज्ञानजागृतिः ।
उत्तमाधमभेदस्य स दुःस्वप्नं न पश्यति ॥ १०६ ॥
अहं च मद्विभूतीश्च विभूत्याव्याश्च मूर्तयः ।
एतत्सर्वं चैकमिति योगयुक्ता विदंति हि ॥ १०७ ॥
ज्ञानयोगेन चानेन मद्रूपे रमते हि यः ।
स एव जातो निःशंकं कृतकृत्यो न संशयः ॥ १०८ ॥
यस्त्वयत्नभेदया दृष्ट्या रंजितो भजने मम ।
तेन तद्भजनच्छंदपाशेन मथितोऽस्म्यहम् ॥ १०९ ॥

अद्वैतमनसा भक्त्या मत्प्राप्तिस्तस्य जायते ।
अपूर्णत्वेऽपि सुखभाक् स्यात्तत्षष्ठे निरूपितम् ॥ ११० ॥
साऽभेदभक्तिस्तु कथं प्राप्ता स्यादिति चेद्वदि ।
शंकसे तर्हि तां वच्मि शृणुष्वात्र सविस्तरम् ॥ १११ ॥

अहं सर्वस्य जगतो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजंते मां बुधा भावसमन्विताः ॥ ८ ॥

अहमेवास्य विश्वस्य निर्मातास्मि धनंजय ।
मत्तस्तत्पोषणमपि शश्वद्भवति सर्वथा ॥ ११२ ॥
पश्यानेकतरंगाणामुत्पत्तिर्जायते जलात् ।
जलमेवाश्रयस्तेषां जीवनं जलमेव हि ॥ ११३ ॥
लहरीणां सर्वथापि जलमेवाश्रयो यथा ।
मत्तो विना जगत्यस्मिन्नान्यदस्त्यपरं क्वचित् ॥ ११४ ॥
मां सर्वव्यापकं ज्ञात्वा सद्भावेन निरंतरम् ।
सर्वदा यत्रकुत्रापि प्रेमपूर्वं भजंत्यपि ॥ ११५ ॥
देशः कालो वर्तमानं मदभेदेन वर्तते ।
यथा पवनरूपः सन्खे संचरति मारुतः ॥ ११६ ॥
एवमात्मज्ञानिनोऽपि त्रैलोक्ये निर्विकल्पतः ।
चित्ते सर्वव्यापकं मां स्मरंतः संचरन्ति हि ॥ ११७ ॥
यो यो दृक्सरणिं प्राप्तः स देव इति भावना ।
भक्तियोगोऽयमेवास्ति त्वं विजानीहि निश्चयात् ॥ ११८ ॥

मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् ।
कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥

मद्रूपा येऽन्तरे जातास्तृप्ता मत्प्राणतश्च ये ।
विस्मृतं जन्म मरणं मज्ज्ञानच्छंदसैव च ॥ ११९ ॥
एवं ज्ञानाद्बलिष्ठाश्च नृत्यंत्यानंदतः सदा ।
गृह्णंति ददति ज्ञानं व्यवहारे परस्परम् ॥ १२० ॥

सरांसि सन्निकृष्टानि पूरे यांति सदैकताम् ।
तत आश्रयभूताश्च तरंगाणां तरंगकाः ॥ १२१ ॥
ज्ञानिनो ह्यैक्यमापन्ना ब्रह्मानंदे च सिंचिताः ।
आत्मबोधोऽप्यात्मबोधं भूषयत्येव बोधतः ॥ १२२ ॥
सूर्यस्य सूर्येणालिंग्यं चंद्रेणालिंगनं विधोः ।
तुल्यौ प्रवाहावेकत्र संयुज्येतां यथैकतः ॥ १२३ ॥
ऐक्यस्य संगमे तद्वद्दृष्टौ भावास्तरंति हि ।
प्राप्नोति ज्ञानिनां श्रैष्ठ्यं यत्संवादचतुष्पथे ॥ १२४ ॥
तस्मिन्महासौख्यभरे प्रामाद्धावंति देशतः ।
बहिरंतस्तु मद्रूपप्राप्त्या गर्जंति तोषिताः ॥ १२५ ॥
एकांते गुरुशिष्याभ्यां मंत्र एकाक्षरोऽन्वहम् ।
जप्यस्तं च त्रिभुवने स्वता गर्जंति तोषतः ॥ १२६ ॥
यथा प्रफुल्लं पद्मं न मकरंदावृतौ क्षमम् ।
राजतो रंकपर्यंतं तुल्यं गंधं प्रयच्छति ॥ १२७ ॥
गायंति मद्गुणांस्तद्वद्विस्मरंति कथामपि ।
आनंदात्तन्मयाः संतो गतदेहात्मभावनाः ॥ १२८ ॥
एवं पूर्णप्रेमरंगास्ते निंदंति दिनं निशाम् ।
ब्रह्मानंदस्वरूपेण सुखं भुंजंति सर्वदा ॥ १२९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ १० ॥

तेभ्योऽस्माभिः प्रदेयस्य विभागं च समीरितम् ।
प्राप्नुवंति यथासांगमात्मन्येवार्जुन स्वतः ॥ १३० ॥
मत्प्राप्त्यर्थमरंतश्च ब्रह्ममार्गे चलंति ते ।
तदग्रे स्वर्गमोक्षादिमार्गाः कान्तारवत्स्मृताः ॥ १३१ ॥
सदाराधनतुष्टेन तेभ्यो देयं च यन्मया ।
तदर्जुन गृहीतं तैः स्वम्याधीनतया पुरा ॥ १३२ ॥
तथापि मम कर्तव्यं तेषां प्रेमविवर्धनम् ।
कालादपि भयं तेषां नैव भूयात्कदाचन ॥ १३३ ॥

क्रीडासक्ते यथा बाले माता दृष्टिं निधाय च ।
पश्चाद्धावत्यंघ्रिचिह्नपथा स्नेहेन चार्जुन ॥ १३४ ॥
यद्यद्याचति बालस्तु तत्तत्सर्वं प्रयच्छति ।
तद्वत्तेषां भक्तिमार्गो रक्षणीयो मयैव सः ॥ १३५ ॥
वर्धयंतो भक्तिमार्गं मद्रूपं प्राप्नुवंति हि ।
वर्धनं भक्तिमार्गाणां ममात्यंतं प्रियं भवेत् ॥ १३६ ॥
यथा मत्प्रेम भक्तानां तथा तेषां ममापि च ।
अनन्यभक्तैर्मद्वेहे सदैव न्यूनतास्त्यलम् ॥ १३७ ॥
तथा सामान्यभक्तार्थं मोक्षस्वर्गौ विनिर्मितौ ।
सह लक्ष्म्या मच्छरीरमेनंतायार्पितं मया ॥ १३८ ॥
यत्ततोऽप्यधिकं ह्यात्मसुखमत्युत्तमं स्मृतम् ।
तत्तु प्रेमलभक्तार्थमस्ति संरक्षितं मया ॥ १३९ ॥
एवं प्रेमयुतान्भक्तान्सविधे स्थापयाम्यहम् ।
इमा वार्ता न कुत्रापि वक्तुं शक्याः कदाचन ॥ १४० ॥

तेषामेवानुकंपार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

तस्मान्मद्रूपात्मभक्तिर्जीवनार्थं कृता च यैः ।
मां विना सर्वमितरन्मन्यंते निष्फलं किल ॥ १४१ ॥
तत्त्वज्ञानां तथा तेषां पुरो दीपाश्रयं करे ।
कृत्वा कर्पूरदीपं च पुरो गच्छामि संततम् ॥ १४२ ॥
अज्ञानरूपरजनौ व्याप्तेऽधतमसेऽपि हि ।
तन्नाशयित्वा भक्तार्थमुदयं करवाण्यहम् ॥ १४३ ॥
अब्रवीद्भगवानेवं तदा पार्थोऽप्युवाच ह ।
भवत्कृपावशाद्यासन्संपूर्णा मे मनोरथाः ॥ १४४ ॥
श्रीकृष्ण मेऽद्य भवता मृष्टः सांसारिको मलः ।
इतः पुनर्जन्ममुक्तः सर्वतः सुखितोऽस्म्यहम् ॥ १४५ ॥

---

१ घस्याभूताय दीपाय.

जन्मनः कारणं हाय नेत्राभ्यामवलोकितम् ।
हस्तगतं जीवितं हीत्येवं मन्ये सुनिश्चितम् ॥ १४६ ॥
देव त्वदुपदेशेन जातो भाग्योदयो मम ।
आयुषश्चापि सार्थक्यमभूद्यदनुग्रहात् ॥ १४७ ॥
भवद्बोधज्योतिषाऽद्य गतमंतर्यद्विस्तमः ।
अत आलोचितः साक्षात्स्वस्वरूपो भवान्मया ॥ १४८ ॥

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

कृष्णाऽसि त्वं परंब्रह्म भूतविश्रांतिमंदिरम् ।
जगन्नाथस्त्वमेवासि पवित्रः परमोऽपि च ॥ १४९ ॥
त्रिषु देवेषु मुख्यस्त्वं पुरुषः पंचविंशकः ।
दिव्यः प्रकृतिभावात्त्वं हृषीकेश परो ह्यसि ॥ १५० ॥
स्वामिन्ननादिसिद्धस्त्वं जन्मधर्मैर्न बध्यसे ।
एवं त्वद्वैभवं सर्वं ज्ञातमद्यैव तत्त्वतः ॥ १५१ ॥
त्रिकालं सूत्रधृग्जीवकलायास्त्वमसि स्फुटम् ।
ब्रह्मांडस्यापि चाधारस्त्वमेवेत्यपि वेद्म्यहम् ॥ १५२ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥

एवं ज्ञाने प्रतीतिश्च द्वितीया सुदृढास्त्यपि ।
पूर्वं महर्षिकथिता भवद्विषयिणी प्रथा ॥ १५३ ॥
तथापि तस्याः सत्यत्वमद्यारूढं स्वचेतसि ।
तच्चापि सर्वं भगवंस्त्वत्कृपातोऽभवद्ध्रुवम् ॥ १५४ ॥
अखंडं नारदोऽप्येवमस्मदग्रे प्रगायति ।
अपि तस्यार्थमज्ञात्वा शुश्रुमो गानमाधुरीम् ॥ १५५ ॥
यथांधाधिष्ठितग्रामे मार्तंड उदितोऽपि हि ।
तापयत्येव तानंधान्प्रकाशदर्शिमंतरा ॥ १५६ ॥

तथाऽध्यात्मं नारदस्य रागालापसमन्वितम् ।
अरंजयदलं चित्तं ज्ञानमण्वपि नाऽकरोत् ॥ १५७ ॥
श्रुताश्च तद्वदसितदेवलादिकृताः कथाः ।
तदापि विषयक्ष्वेडग्रस्तासीद्धीर्ममापि हि ॥ १५८ ॥
परिणामाद्विषस्यास्य मधुरं कटुतां व्रजेत् ।
कटवो विषयाः शश्वज्जीवानां मधुरास्तथा ॥ १५९ ॥
वक्तव्यमितराणां किं व्यासो राजगृहे स्वयम् ।
आगत्य सर्वदा वक्ति कृष्ण त्वच्चरितं शुभम् ॥ १६० ॥
ध्वांते चिंतामणिर्लब्धो दूरे त्यक्तोऽज्ञभावतः ।
सूर्यप्रकाशे विज्ञातश्चिंतामणिरिति स्वयम् ॥ १६१ ॥
तथा व्यासादिभिः प्रोक्ताश्चिद्रत्नखनयोऽपि हि ।
हेलयोपेक्षिता आसंस्त्वज्ज्ञानार्कं विना मया ॥ १६२ ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
नहि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

अद्य त्वद्वागिनकरैर्यातमृत्युकिकश्मलम् ।
अज्ञानं यत्तद्विषयं तत्प्रणष्टं च मूलतः ॥ १६३ ॥
तदुक्तयो ज्ञानबीजं पतितं चित्तभूतले ।
जाताः कृपाजलाद्वृक्षाः ससंवादफलोपगाः ॥ १६४ ॥
उक्ता या नारदादीनां सरितो जलपूरिताः ।
मम रूपे विशंत्यद्य संवादसुखसागरे ॥ १६५ ॥
पूर्वस्मिन्जन्मनि स्वामिन्पुण्यानि विहितानि मे ।
तेन त्वत्सहृदोर्लाभात्पुण्यान्यनृणतां ययुः ॥ १६६ ॥
यद्यपि श्रेष्ठमुखतः कर्णाभ्यां त्वद्गुणाः श्रुताः ।
तथापि त्वत्कृपाऽभावाज्ज्ञातं तत्त्वं नचाण्वपि ॥ १६७ ॥
यदा दैवं सानुकूलमुद्यमाः सफलास्तदा ।
भवंति तद्वत्पठितश्रुताद्यं गुर्वनुग्रहात् ॥ १६८ ॥
वनरक्षः प्रयत्नेन नित्यं वृक्षान्प्रसिंचति ।
परं विना वसंतर्तुं न स्यात्तेषां फलोद्गमः ॥ १६९ ॥

विषमज्वरनिर्मुक्तौ मधुरं स्वादु भाव्यते ।
शरीरारोग्यतायां तु ज्ञेयमुत्तममौषधम् ॥ १७० ॥
किंवा वागादींद्रियेषु चैतन्यं प्रविशेद्यदा ।
तदा कार्यक्षमाणि स्युः सार्थक्येनाखिलान्यपि ॥ १७१ ॥
तथा वेदाद्यध्ययनं किंवा योगादिसाधनम् ।
स्वभ्यस्तं च भवेत्पूर्णं यदा स्याच्छ्रीगुरोः कृपा ॥ १७२ ॥
एवं प्रतीतिबलतो मुदाऽनृत्यत्तदाऽर्जुनः ।
अवदच्च तदा देव त्वद्वाक्यं रुचितं मम ॥ १७३ ॥
कैवल्याधिपते सत्यं प्रतीतिसंख्यमागता ।
त्वां विज्ञातुं समर्थाः स्युर्न देवा न च दानवाः ॥ १७४ ॥
त्वत्स्वरूपमविज्ञाय ज्ञातं यो मन्यते वृथा ।
सोऽज्ञानी निश्चयेनेति मत्प्रतीतिर्दृढाऽभवत् ॥ १७५ ॥

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

आकाशस्य महत्त्वं च जानात्याकाश एव हि ।
पृथिव्येव विजानाति पृथ्व्या रूपं नहीतरः ॥ १७६ ॥
तथाऽखिलाः स्वीयशक्तीर्जानासि त्वं रमापते ।
गर्वं वहंति वेदाद्या ज्ञातं मत्यैव केवलम् ॥ १७७ ॥
मनसोऽग्रे कथं यायाद्वायुं वाऽऽवृणुयात्कथम् ।
मायानदीं कथं तीर्त्वा गच्छेद्बाहुबलेन हि ॥ १७८ ॥
स्वज्ञानं दुर्घटं तद्वदतो जानाति कोऽपि न ।
ज्ञातुं समर्थस्त्वामेकस्त्वमेव भुवनत्रये ॥ १७९ ॥
त्वां त्वमेव विजानासि वक्तुमन्यान्क्षमोऽसि च ।
अतः स्वेच्छाललाटस्थं मार्जय स्वेदमेकदा ॥ १८० ॥
श्रीकृष्ण जगदुद्भूते हे संसारेभकेसरिन् ।
देवदेवार्चित स्वामिन्निदं किं भवता श्रुतम् ॥ १८१ ॥
महिमानं तवालोक्य नाहं पात्रं पुरःस्थितौ ।
तद्भयेन न चेद्ब्रूयां नास्त्युपायोऽपरः कश्चित् ॥ १८२ ॥

समुद्रः सरितश्चापि संति पानीयपूरिताः ।
रिक्तचत्ताश्चातकस्य स्वात्यृक्षजलकांक्षिणः ॥ १८३ ॥
सर्वत्र गुरवः संति न त्वत्तोऽन्या गतिर्मम ।
अस्त्विदं, कृष्ण मे ब्रूहि त्वद्विभूतीः समासतः ॥ १८४ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

देव या हि विभूतीस्ते दिव्या व्याप्य जगत्स्थिताः ।
अखिला अपि ता मह्यं कृपया दर्शय प्रभो ॥ १८५ ॥
संति यद्यप्यनंतास्ता व्याप्य त्रैलोक्यमासते ।
विशेषतस्तासु मुख्यास्तावत्यः कथयाऽधुना ॥ १८६ ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिंतयन् ।
केषु केषु च भावेषु चिंत्योऽसि भगवन्मया ॥ १७ ॥

अहं कथं त्वां जानीयां चिंत्यं रूपं च किं तव ।
भावयेयाखिलं रूपं ध्यानं किमपि नो भवेत् ॥ १८७ ॥
अतः संक्षेपेण पूर्वं विभूतीः कथितास्त्वया ।
पुनस्ता एव वक्तव्या विस्तरेणैकदा मम ॥ १८८ ॥
येषु येषु च भावेषु मया चिंत्योऽसि माधव ।
तांस्तान्स्पष्टतया मह्यं कथयस्वाऽविशेषतः ॥ १८९ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

पृष्टा विभूतयो यास्ते ब्रूहि भूतपते पुनः ।
मुहुर्मुहुस्ताः किं ब्रूयामिति त्वं भाषसे यदि ॥ १९० ॥
तर्ह्येवं संशयं चित्ते मा कुरुष्व जनार्दन ।
प्राप्ते सामान्यामृतेऽपि नैवालंप्रत्ययो भवेत् ॥ १९१ ॥
देवैर्मृत्युभयात्पीतं कालकूटसहोदरम् ।

---

१ अमृतम्, अस्याब्धेः सकाशाद्विषेण सहोत्पन्नत्वात्सहोदरत्वम्.

तथापींद्रा ब्रह्मदिने जाता नष्टाश्चतुर्दश ॥ १९२ ॥
सिंधोरेव रसोऽगच्छद्वृथाऽमृतमिति प्रथाम् ।
तथापि तद्रसास्वादे न तृप्तिः कस्यचिद्भवेत् ॥ १९३ ॥
एवं क्षुद्रामृतस्यापि चेन्माधुर्यं सुदुस्त्यजम् ।
तदाऽनपेक्ष्यं किंवा स्याद्भवतः परमामृतम् ॥ १९४ ॥
मंदराचलसंघुष्टक्षीरसिंधुं विनैव च ।
इदं स्वभावतः सिद्धं कृष्ण त्वत्परमामृतम् ॥ १९५ ॥
न दृढं द्रवरूपं वा न गंधोऽस्य न माधुरी ।
प्राप्तं स्यात्स्मृतिमात्रेण देहिनो यस्य कस्यचित् ॥ १९६ ॥
यत्कथाश्रवणादेव संसारो भासते मृषा ।
अनायासेन स्थिरता स्वांगे प्राप्नोत्यबाधिता ॥ १९७ ॥
जन्ममृत्योर्येन वार्ता निःशेषं प्रविलीयते ।
बहिरंतर्महत्सौख्यं वर्धत्येव निरंतरम् ॥ १९८ ॥
दैवेन तत्सेवितं चेत्स्वस्वरूपं करोति तत् ।
तत्रार्पितं तु मे चित्तं न वक्तुं शक्नुयादलम् ॥ १९९ ॥
त्वन्नामैव प्रियं मेऽस्ति दर्शनं सन्निधे स्थितिः ।
ततः प्रियकथा वक्ति परमानंदकारकाः ॥ २०० ॥
इदं सुखं कथमिति वक्तुं नाहं तथापि च ।
भवन्मुखाच्छृणोम्यत्र भवंतु पुनरुक्तयः ॥ २०१ ॥
सूर्यः पर्युषितो न स्यात्राऽशुचिर्हव्यवाड् भवेत् ।
संततं प्रवहद्गांगं भवेत्पर्युषितं किमु ॥ २०२ ॥
कृष्ण यद्भवता प्रोक्तं साक्षाद्ब्रह्मैव तत्खलु ।
चंदनद्रुमपुष्पाणि मन्ये घ्राणार्पितानि हि ॥ २०३ ॥
एवं पार्थवचः श्रुत्वा कृत्वा सर्वांगचालनम् ।
उवाचास्ति खनिः पार्थो भक्तिज्ञानोभयोरपि ॥ २०४ ॥
तत्संतोषभरेणांगं प्रेम्णाऽभूद्विह्वलं तदा ।
सायासेन तद्वावृत्याप्यनंतस्त्विदमब्रवीत् ॥ २०५ ॥

श्रीभगवानुवाच—

हंत ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यंतो विस्तरस्य मे ॥ १९ ॥

ब्रह्मणोऽहं पितासीति यच्चित्ते स्मरणं नहि ।
सोऽब्रवीद्धे पार्थ तात कृतं सर्वोत्तम त्वया ॥ २०६ ॥
तातेत्यथोचत्पार्थं यत्कृष्णश्चित्रं न भाति तत् ।
न किं स नंदबालत्वं स्वीचकार स्वयं मुदा ॥ २०७ ॥
अस्त्वियद् प्रस्तुतं सर्वमत्यंतं प्रेमदर्शकम् ।
भगवानवदत्पार्थ कथयिष्ये शृणुष्व तत् ॥ २०८ ॥
पृच्छसि त्वं विभूतीर्याः संख्यपाराः पृथासुत ।
मदीया अप्यसंख्यत्वान्नाहं जानामि सर्वथा ॥ २०९ ॥
स्वांगस्थान्यपि लोमानि संख्यातुं कोऽपि न क्षमः ।
तथा मदीया अपि ताः संख्यातुं न क्षमोऽस्म्यहम् ॥ २१० ॥
अहं कियान्कथं चेति पार्थ वेद्मि न तत्त्वतः ।
अतः प्राधान्यतो वच्मि विभूतीरवधारय ॥ २११ ॥
याभिर्ज्ञाताभिरखिला विज्ञाताः स्युः पृथासुत ।
यथा हस्तगते बीजे वृक्षो हस्तगतो भवेत् ॥ २१२ ॥
उद्यानलब्धौ लभ्यंते फलपुष्पाण्ययत्नतः ।
तथैव मुख्यविज्ञाने ज्ञातं स्यादखिलं तदा ॥ २१३ ॥
अपारो मम विस्तारो नांतस्तस्य धनुर्धर ।
गगनाद्यश्च विस्तारः शश्वन्मयि विलीयते ॥ २१४ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

कुटिलालकमूर्धन्यो धनुर्वेदत्रियंबक ।
भूतमात्रेऽखिले व्याप्तोऽप्यहमात्मास्मि पांडव ॥ २१५ ॥
चित्तेऽन्तरहमेवाऽस्मि संवेष्ट्यास्मि बहिः सदा ।
अहमाद्यौ तथांतेऽहं मध्येऽहं सर्वदा स्थितः ॥ २१६ ॥

अंतर्बहिः सर्वतोऽपि मेघानां व्यापकं वियत् ।
तथैवोद्भूय गगनाद्विलीयन्ते विहायसि ॥ २१७ ॥
यदा पुनर्विलीयंते तदा यांति स्वरूपताम् ।
तथोत्पत्तिस्थितिलयगतिर्जीवगतास्म्यहम् ॥ २१८ ॥
अनंतत्वं व्यापकत्वं त्वं विभूत्याऽवगच्छसि ।
जीर्णं कृत्वा कर्णरूपं कथामग्रे शृणुष्व भोः ॥ २१९ ॥
इतोऽपि लालसा चेत्ते विभूतिश्रवणेऽस्ति हि ।
मयोक्तं कथयामीति प्रधानाः शृणु वच्म्यतः ॥ २२० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

इत्युक्त्वा सत्कपश्चाहादित्येषु विष्णुरस्म्यहम् ।
तेजोधिकेषु सर्वेषु रश्मिमाग्रविरस्म्यहम् ॥ २२१ ॥
मरुतामपि सर्वेषां मरीचिरहमस्मि च ।
तारागणेषु तेजस्वी चंद्रोऽहं शांतिदः सदा ॥ २२२ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

अखिलेष्वपि वेदेषु सामवेदोऽस्मि तत्त्वतः ।
देवेष्वपि मरुद्वंधुर्महेंद्रोऽस्मि न संशयः ॥ २२३ ॥
एकादशं मनश्चाहमिंद्रियेष्वखिलेष्वपि ।
भूतेषु या वरीवर्ति चेतना सापि चास्म्यहम् ॥ २२४ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

एकादशेषु रुद्रेषु मदनारिश्च यः स्मृतः ।
स शंकरोऽस्मि सर्वेशो निःशंकं विद्धि मानसे ॥ २२५ ॥
यक्षरक्षोगणेष्वीड्यः शंभुमित्रं धनाधिपः ।
कुबेरोऽस्मीति चानंतः प्रोक्तवान्निश्चयेन हि ॥ २२६ ॥
यश्चाष्टवसुषु प्रोक्तः पावकाख्यः स चास्म्यहम् ।

अद्रिष्वपि च सर्वेषु मेरुरस्म्युच्चशृंगवान् ॥ २२७ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥ २४ ॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

स्वर्गसिंहासनस्थायः प्रतिष्ठाक्रदहर्निशम् ।
पुरोहितानां यो राजा स बृहस्पतिरप्यहम् ॥ २२८ ॥
त्रैलोक्यसेनापतिषु स्कंदः शंकरवीर्यजः ।
कृत्तिकास्वग्निना क्षिप्तः स एवास्मि महामते ॥ २२९ ॥
सरोवरेषु सर्वेषु सागरोऽस्मि नदीपतिः ।
महर्षिषु तपोराशिर्भृगुरस्म्यहमेव च ॥ २३० ॥
सर्ववाणीष्वनुस्यूतमहमस्म्यक्षरं परम् ।
इति संप्रोक्तवान्वैकुंठाधिपो नंदनंदनः ॥ २३१ ॥
सर्वेष्वपि च यज्ञेषु जपयज्ञोऽस्मि तत्त्वतः ।
स ह्योंकारादिमंत्रैश्च कर्मत्यागकरः सदा ॥ २३२ ॥
नाम्नो जपश्च परमो नाम्न ज्ञानाद्यपेक्षितम् ।
नाम्ना धर्माः पावनाः स्युर्वेदादौ ब्रह्म चैव यत् ॥ २३३ ॥
अचलेष्वपि शैलेषु पुण्यपुंजात्मकश्च यः ।
सोऽहं हिमाचलश्चेति ब्रवीति कमलापतिः ॥ २३४ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेंद्राणां नराणां च नराधिपम् ॥ २७ ॥

कल्पवृक्षः पारिजातश्चंदनश्च गुणैर्वराः ।
विख्याता अपि ये तेषु पूज्योऽश्वत्थोऽहमस्मि भोः ॥२३५॥
देवर्षिष्वपि सर्वेषु नारदोऽहमसंशयम् ।

गंधर्वेषु च सर्वेषु तथा चित्ररथोऽस्म्यहम् ॥ २३६ ॥
अशेषेष्वपि सिद्धेषु तपस्वी कपिलोऽस्म्यहम् ।
उच्चैःश्रवास्तुरंगाणामश्वरत्नं तथास्म्यहम् ॥ २३७ ॥
राज्यभूपासु करिषु श्रेष्ठश्चैरावतोऽस्म्यहम् ।
पयोराशेः समुद्भूतो यो देवासुरमंथने ॥ २३८ ॥
यं सेवंते प्रजाः सर्वा वशीभूता निरंतरम् ।
मनुष्येषु च यो राजा विभूतिं विद्धि तं मम ॥ २३९ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

सर्वायुधेषु प्रवरं करे शतमखस्य यत् ।
विराजते शश्वदेव तद्वज्रमहमेव च ॥ २४० ॥
कामधेनुश्च धेनूनां विष्वक्सेनोऽहमब्रवीत् ।
यश्च प्रजननः प्रोक्तः प्रसिद्धो मदनोऽस्म्यहम् ॥ २४१ ॥
सर्वसर्पकुले मुख्यो वासुकिश्चाहमेव हि ।
पार्थ नागेषु सर्वेषु योऽनंतः सोऽपि चास्म्यहम् ॥ २४२ ॥
अखिलेष्वपि यादःसु मुख्यः पश्चिमदिक्पतिः ।
वरुणोऽसीति चानंतः कथयामास पांडवम् ॥ २४३ ॥
पितॄणां चापि सर्वेषां प्रोक्ता या पितृदेवता ।
सोऽर्यमास्मीति भगवानवोचत्पांडवं तदा ॥ २४४ ॥
जगतः प्राणिमात्राणां शुभाशुभफलानि ये ।
कर्मानुसारतश्चापि विलिखंति यथातथम् ॥ २४५ ॥
तेषामपि नियंतॄणां युक्तायुक्तविचारतः ।
कर्मसाक्षी यमोऽसीति प्रत्यवादीद्रमापतिः ॥ २४६ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेंद्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

अपि दैत्यकुलोत्पन्नो दैत्यदौःशील्यवर्जितः ।
स प्रह्लादोऽस्म्यहमिति विद्धि साधुषु योऽग्रणीः ॥ २४७ ॥
कालोऽस्म्यहं कलयतामिति गोपालकोऽवदत् ।
मृगेष्वपि च सिंहोऽहमखिलश्वापदाग्रणीः ॥ २४८ ॥
पक्षिजातिषु सर्वासु गरुडोऽस्मि च तद्वपुः ।
अतः पृष्ठेन मां वोढुं सामर्थ्यं तस्य विद्यते ॥ २४९ ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

घटिकामितकालात्प्राक्करोतीलाप्रदक्षिणाम् ।
एकेनोड्डानमात्रेण सप्ताब्धीनपि लंघति ॥ २५० ॥
एवं त्वरितगो वायुर्वेगवत्सु च सोऽप्यहम् ।
सर्वशस्त्रभृतामग्र्यः श्रीरामोऽप्यहमस्मि भोः ॥ २५१ ॥
यः संकटेऽपि धर्मात्मा केवलं धनुराश्रितः ।
लेभे विजयलक्ष्मीं च त्रेतायां वीर्यवत्तरः ॥ २५२ ॥
सुवेलाद्रौ रावणस्य शिरःश्रेणीमखंडयत् ।
उदोमंत्रेण गगने भूतेभ्यस्तान्बलीन्ददौ ॥ २५३ ॥
देवानां रक्षितं श्रेष्ठ्यं धर्मस्योज्जीवनं कृतम् ।
सूर्यवंशे प्रादुरभूत्केवलं प्रतिसूर्यवत् ॥ २५४ ॥
एवं मुख्यः शस्त्रधृत्सु रामः सीतापतिस्त्वहम् ।
पुच्छयुग्जलजीवेषु विख्यातो मकरोऽस्म्यहम् ॥ २५५ ॥
श्रेष्ठा सर्वप्रवाहेषु भगीरथसमाहृता ।
ग्रसिता जह्नुना गंगा जंघाभेदादभूत्पुनः ॥ २५६ ॥
यस्याः प्रौढिः प्रवाहेषु श्रेष्ठा त्रिभुवने सरित् ।
जाह्नवी साप्यहं पार्थ साक्षान्मन्मूर्तिरेव सा ॥ २५७ ॥
एवंप्रकारा विश्वस्मिन्भिन्ना मम विभूतयः ।
सहस्रजन्मभिश्चार्धा नालं जातास्तु वर्णनात् ॥ २५८ ॥

सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन ।

अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

चिनयाम्येकदैवाहं नक्षत्राण्यखिलान्यपि ।
इत्येवमर्जुनेच्छायां कार्या स्याद्गगनच्छिदिः ॥ २५९ ॥
पृथिव्यणूनां गणने कक्षे भूगोलमाश्रयेत् ।
तद्विस्तारं तथा ज्ञातुं पूर्वं मज्ज्ञानमीप्सितम् ॥ २६० ॥
सशाखफलपुष्पाणामप्याकलनमेकदा ।
विना वृक्षोत्पाटनेन न स्यादेव कदाचन ॥ २६१ ॥
तद्वदेव विभूतीश्च ज्ञातव्या यदि चैकदा ।
तदा पूर्वं मत्स्वरूपं ज्ञातव्यं स्यादकल्मषम् ॥ २६२ ॥
पृथग्विभूतिकथने कति श्रोष्यसि पांडव ।
अतस्त्वं विद्धि मनसि मां सर्वं व्याप्य धिष्ठितम् ॥ २६३ ॥
आदौ मध्ये तथांते च सृष्टेः कारणमस्म्यहम् ।
तंतवः सरला वक्रा व्याप्ता यद्वत्पटे तथा ॥ २६४ ॥
एवं व्यापकताज्ञाने नश्यवद्या विभूतयः ।
परं त्वद्योग्यता नेति तदास्तां पार्थ भाषणम् ॥ २६५ ॥
कथयेति पृच्छसि त्वं सुभद्रेश ततः शृणु ।
सर्वविद्यासु वेदांतविद्या निश्चितमस्म्यहम् ॥ २६६ ॥
वक्तृष्वपि च सर्वेषु वादः पूर्वोत्तरोऽस्म्यहम् ।
यः कदाप्यैक्यभावेन न समाप्तो भवेत्कचित् ॥ २६७ ॥
निर्णये वर्धते शश्वच्छ्रवणे तर्कविस्तरः ।
वक्तॄणां रोचते यद्वन्मधुरा वक्तृता सदा ॥ २६८ ॥
एवं प्रवादे यो वादो गोविंदो वक्ति सोऽस्म्यहम् ।
सर्वाक्षरेषु योऽकारः स्वरगो विशदोऽस्म्यहम् ॥ २६९ ॥
पार्थ सर्वसमासेषु द्वंद्वाख्योऽस्मि न हीतरः ।
मक्षिकातो विध्यवधिः कालोऽहं सर्वभक्षकः ॥ २७० ॥

मेरुमंदारसहितां महीं नयति यो लयम् ।
गुप्तां करोति यस्तत्र जाते जलमये लये ॥ २७१ ॥
प्रलये ग्रसते तेजो वायून्संभक्षयत्यपि ।
यस्योदरेऽपि वियतोऽवकाशो लभ्यते लये ॥ २७२ ॥
एवं योऽनवधिः कालः सोऽहमित्यवदद्धरिः ।
पुनश्च सृष्टिनिर्माता स सर्वोत्पादकोऽस्म्यहम् ॥ २७३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ३४

सृष्टभूतधृगस्मीह भूतानां पालकोऽपि च ।
अंते संहारको यश्च मृत्युः सोऽप्यहमेव हि ॥ २७४ ॥
अतः स्त्रीवाचकेष्वेषु सप्त संति विभूतयः ।
अद्य ताः कथयाम्यग्रे शृणुष्वावहितः सदा ॥ २७५ ॥
कीर्तिर्या नित्यनूत्नास्ति सापि मन्मूर्तिरर्जुन ।
औदार्ययुक्ता संपत्तिः साहमेव सुनिश्चितम् ॥ २७६ ॥
न्यायासने चोपविश्य विचारयति या नयम् ।
सा वाणी मत्स्वरूपैव धनुर्धर न संशयः ॥ २७७ ॥
वस्तुजातं समालोक्य चित्ते या मत्स्मृतिर्भवेत् ।
सा निश्चयेन ज्ञातव्या स्मृतिशक्तिर्मदात्मिका ॥ २७८ ॥
या तत्परा निजहिते सा बुद्धिर्मत्स्वरूपिणी ।
धृतिरप्यसदीयैव सा क्षमाप्यहमर्जुन ॥ २७९ ॥
एवं स्त्रीसमुदायेऽपि विद्धि सप्त विभूतयः ।
इति संसारेभसिंहः श्रीहरिः प्रोक्तवान्स्वयम् ॥ २८० ॥

बृहत्साम तथा साम्नां गायत्री छंदसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

सामसु श्रुतिगीतेषु बृहत्सामेति यन्मतम् ।
तदप्यहमिति प्रोचे पांडवाय रमापतिः ॥ २८१ ॥
तथा छंदस्सु सर्वेषु वर्वर्ति श्रेष्ठ्यमाश्रितः ।

गायत्रीति च यच्छंदः सोऽहं निर्भ्रान्तमर्जुन ॥ २८२ ॥
मासेषु मार्गशीर्षोऽहमिति शार्ङ्गधरोऽब्रवीत् ।
ऋतुष्वहं समस्तेषु वसंतः कुसुमाकरः ॥ २८३ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पांडवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

द्यूतं कपटविद्यासु विभूतिस्तन्ममैव हि ।
ततश्चतुष्पथेऽप्यस्य प्रतिबंधो न विद्यते ॥ २८४ ॥
सप्रकाशपदार्थेषु यच्च तेजस्तदस्म्यहम् ।
इष्टकार्येषु विजयः सहजः सोऽस्म्यहं सदा ॥ २८५ ॥
शुद्धो न्यायश्च यत्रास्ति व्यवसायसुखप्रदः ।
सोऽहमस्मीति देवानां राजा प्रोवाच सादरम् ॥ २८६ ॥
सत्त्वाधिष्ठितभूतेषु सत्त्वमस्मि सुनिश्चितम् ।
वासुदेवो यादवेषु श्रीमान्योऽस्ति स चास्म्यहम् ॥ २८७ ॥
वसुदेवात्समुत्पन्नो गोप्यर्थं गोकुले गतः ।
सोऽहं कदाचित्सप्राणां पूतनामग्रसं क्षणात् ॥ २८८ ॥
बालभावेऽप्यनुत्तीर्णे दैत्यहीना कृता मही ।
गोवर्धनं करे धृत्वा शक्रगर्वोऽप्यपाहृतः ॥ २८९ ॥
शल्यं हृतं च कालिंद्यास्त्रातं गोकुलमग्नितः ।
वत्सचौर्ये ब्रह्मणोऽपि सर्वथा भ्रामितं मनः ॥ २९० ॥
कौमारेऽथ समुद्भूते कंसप्रभृतयः खलाः ।
महापराक्रमोपेता घातिता लीलयैव हि ॥ २९१ ॥
वक्तव्यं कतिधा चेदं श्रुतं यच्चेक्षितं त्वया ।
यादवेष्वपि तज्ज्ञेयं मत्स्वरूपं न संशयः ॥ २९२ ॥
अर्जुनोऽहं पांडवेषु ज्ञेयश्चंद्रकुलोद्भवः ।
अतः परस्परं प्रेमभावे विघटनं नहि ॥ २९३ ॥

मिथ्या गृहीत्वा संन्यासं मत्स्वसाऽपहृता त्वया ।
तथापि न विकल्पो मे द्वयोरेकत्वयोगतः ॥ २९४ ॥
व्यासोऽहं मुनिवृंदेषु ब्रूते यादवराडिति ।
कवीश्वरेष्वपि महानुशना कविरस्म्यहम् ॥ २९५ ॥

दंडो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

सर्वेषां च नियंतॄणामध्याब्रह्मपिपीलिकम् ।
दंडो यः सर्वदमनः सोऽहमस्मि न संशयः ॥ २९६ ॥
सारासारविचारज्ञो धर्मज्ञानैकपक्षधृक् ।
शास्त्रेषु यच्च मूर्धन्यं नीतिशास्त्रमहं हि तत् ॥ २९७ ॥
गुह्येषु गूढं यन्मौनं, स्रष्टाप्यज्ञो यदग्रतः ।
तच्च मौनमहं विद्धि धनुर्धर यथार्थतः ॥ २९८ ॥
ज्ञानवत्सु च यज्ज्ञानं तदहं चार्जुन स्वयम् ।
अस्त्विदं मद्विभूतीनामंतो नास्ति पृथासुत ॥ २९९ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥
नांतोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

कचित्पर्जन्यधाराणां गणना स्यात्प्रयत्नतः ।
तथा तृणांकुराणां च संख्यानं समये भवेत् ॥ ३०० ॥
यथा लहर्यः सिंधूत्था असंख्येयाः कदापि हि ।
तथा विभूतयोऽनंताः संख्यातुं नैव च क्षमाः ॥ ३०१ ॥
तथापि मुख्यास्त्वामत्र कीर्तिताः पंचसप्ततिः ।
तेन मन्ये भवद्धेतुः पूर्णः सामान्यतोऽभवत् ॥ ३०२ ॥
योऽयं विभूतिविस्तारो वस्तुतोऽपार एव हि ।
अतः कति प्रवक्तव्याः कति त्वं श्रोतुमर्हसि ॥ ३०३ ॥

अत्र त्वां मर्म वक्ष्यामि सुगूढमपि चैकदा।
यस्माद्भूतांकुरो बीजात्तद्बीजमपि चास्म्यहम् ॥ ३०४ ॥
तस्मात्सूक्ष्मं तथा स्थूलं मुक्त्वा नीचोच्चभावनाम्।
व्याप्तं मां वस्तुमात्रेऽपि समदृष्ट्या विभावयेत् ॥ ३०५ ॥
अतोऽपि सुलभा युक्तिरन्यास्ति कथयामि ताम्।
यथा स्वमेव जानासि विभूतीः पार्थ सर्वशः ॥ ३०६ ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं ममतेजोंशसंभवम् ॥ ४१ ॥

संपत्तिश्च दया चैव यत्र स्यास्यति नित्यदा।
तां विभूतिं विजानीहि ममैवेति धनंजय ॥ ३०७ ॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

एकं खेऽस्ति रवेर्बिंबमपि त्रैलोक्यदीपकम्।
तथैवाज्ञां ममैकस्य पालयंत्यखिला जनाः ॥ ३०८ ॥
एतादृशं न मन्येत छोकं निर्धनमेव वा।
किं कामधेनुना साकमिच्छापूर्तिश्चरत्यहो ॥ ३०९ ॥
तां प्राप्येच्छति यत्कोऽपि तत्सा प्रसवति स्वयम्।
तथा विभूतिसंगे मे साग्रमैश्वर्यमस्त्ययि ॥ ३१० ॥
तथैवमेव जानीयाद्यदाज्ञां शिरसा जनाः।
वहंति सर्वे तान्विद्धि मद्विभूतीरिति स्वतः ॥ ३११ ॥
यत्सामान्यविशेषेति भेदज्ञानं सुदूषितम्।
यतः सर्वत्र निर्भ्रान्तसिद्धेक एवास्मि तत्त्वतः ॥ ३१२ ॥
एवं चेदुच्चनीचादि कुतः सा भेदकल्पना।
तथैव चात्मनः सिद्धेः कलंकं किमु लापयेत् ॥ ३१३ ॥
व्यर्थं घृतं किं मथ्नीयाद्दंधनं वाऽमृतस्य किम्।
वायोर्दक्षिणवामेति भेदोऽङ्गेषु क विद्यते ॥ ३१४ ॥
सूर्यं द्रष्टुं प्रयत्ने तु दर्पिनंक्ष्यति केवलम्।

यथांधो बाह्यदृष्ट्याऽयं तथांतरपि च स्फुटम् ॥ ३२९ ॥
इदमस्तु, तदा पार्थः स्वहिताय समुद्यतः ।
ततोऽप्यधिकमुत्कंठाऽवीवृधत्तस्य बोधने ॥ ३३० ॥
सोऽवादीद्यांतःप्रतीतिर्याऽहो दृग्गोचराऽस्तु सा ।
यदमभ्युदयार्थाय मतिस्तस्याभ्यवर्धत ॥ ३३१ ॥
तदाऽभ्यामेव दृष्टिभ्यां विश्वरूपं समासतः ।
पश्येयेति बलिष्ठाऽभूदिच्छा दैवेन तस्य हि ॥ ३३२ ॥
आसा कल्पतरोः शाखा यस्या वंध्यं फलं नहि ।
यद्यद्वक्ति तदा पार्थः कृष्णः पूर्णं करोति तत् ॥ ३३३ ॥
प्रह्लादं रक्षितुं भक्तं विपरूप्यभवत्स्वयम् ।
स श्रीकृष्णो गुरुः साक्षात्पार्थस्य पुरतः स्थितः ॥ ३३४ ॥
प्रश्नार्थं विश्वरूपस्य कथं पार्थः समारभत् ।
तदग्रे वर्णयिष्येऽहमिति ज्ञानेश्वरोऽब्रवीत् ॥ ३३५ ॥

इति श्रीज्ञानेश्वरविरचितायां भावार्थदीपिकायां अर्थंतनिरूपणे
दशमोऽध्यायः ॥ १० ॥

श्लोकाः ४२ नवश्लोकाः ३३५

तथैव मत्स्वरूपेऽपि न सामान्यविशेषकम् ॥ ३१५ ॥
भिन्नभिन्ना मद्विभूतीर्नार्होः संख्यातुमंजसा ।
अतः सुभद्राधिपते किं ब्रूयामधिकं तव ॥ ३१६ ॥
ममैव चांशेनैकेन व्याप्तमस्त्यखिलं जगत् ।
अभेदबुद्ध्या बुध्वैतत्त्वं सर्वत्र भजस्व माम् ॥ ३१७ ॥
एवं धनवसंतोऽयमेकांतो यश्च योगिनाम् ।
सकलैश्वर्यवांश्चैव श्रीकृष्णश्चैवमब्रवीत् ॥ ३१८ ॥
तदाऽर्जुनोऽवदत्स्वामिन्नुक्तं भेदं त्यजेति यत् ।
तेनाहं चैव भेदश्च पृथगस्तीति निश्चितम् ॥ ३१९ ॥
उदयात्प्राग्रविर्ध्वांतोच्छित्त्यै किं प्रार्थ्यते जगत् ।
तद्वद्ब्रूयां तथाऽहं त्वां तदप्युन्मत्तवद्भवेत् ॥ ३२० ॥
एकदा तव नामैव सकृदुच्चरितं श्रुतम् ।
तदापि भेदो नष्टः स्याद्धृदयाद्धकुरंततः ॥ ३२१ ॥
भवान्परब्रह्ममूर्तिर्दैवाल्लब्धो मया यदि ।
तर्हि भेदः कदा कस्य कथं दृश्येत कं प्रति ॥ ३२२ ॥
उष्णबाधा कथं वा स्याद्गतश्चंद्रमंदिरे ।
तथेह श्रीहरे महां त्वयोक्तं सत्यमेव तत् ॥ ३२३ ॥
तदाऽनंतोऽपि तुष्टः सन्नालिलिंग पृथासुतम् ।
तथोक्तवान्पार्थ रोषं मदुक्ते त्वं न धारय ॥ ३२४ ॥
विभूतीनां प्रकारा ये भेदेन कथिता मया ।
त एवाऽभेदरूपेण त्वच्चित्ते फलिता न वा ॥ ३२५ ॥
इति द्रष्टुं तथा तेऽद्य चाह्यात्कारेण भाषितम् ।
जातं त्वद्धृद्यमेदेन ज्ञातमित्थं मया स्फुटम् ॥ ३२६ ॥
तदाऽर्जुनोऽब्रवीदेव स्वयमालोचयेदिदम् ।
पश्याम्यहं जगत्कृत्स्नं यत्त्वया व्याप्तमेव हि ॥ ३२७ ॥
एवं योग्योऽभवत्पार्थ इति ब्रुवति संजये ।
धृतराष्ट्रः स्वस्य एव तत्काले समुपाविशत् ॥ ३२८ ॥
सखेदः संजयस्तत्र मूने भाग्यविपर्ययात् ।

यथांधो बाह्यदृष्ट्याऽयं तथांतरपि न स्फुटम् ॥ ३२९ ॥
इदमस्तु, तदा पार्थः स्वहिताय समुद्यतः ।
ततोऽप्यधिकमुत्कंठाऽवीवृधत्तस्य बोधने ॥ ३३० ॥
सोऽवादीद्यांतःप्रतीतिर्बाह्ये दृग्गोचराऽस्तु सा ।
एवमभ्युदयार्थाय मतिस्तस्याभ्यवर्धत ॥ ३३१ ॥
तदाऽस्यामेव दृष्टिभ्यां विश्वरूपं समासतः ।
पश्येयेति बलिष्ठाऽभूदिच्छा दैवेन तस्य हि ॥ ३३२ ॥
आशा कल्पतरोः शाखा यस्या वंध्यं फलं नहि ।
यद्यद्वक्ति तदा पार्थः कृष्णः पूर्णं करोति तत् ॥ ३३३ ॥
प्रह्लादं रक्षितुं भक्तं विषरूप्यभवत्स्वयम् ।
स श्रीकृष्णो गुरुः साक्षात्पार्थस्य पुरतः स्थितः ॥ ३३४ ॥
प्रश्नार्थं विश्वरूपस्य कथं पार्थः समारभत् ।
तदग्रे वर्णयिष्येऽहमिति ज्ञानेश्वरोऽब्रवीत् ॥ ३३५ ॥

इति श्रीज्ञानेश्वरविरचितायां भावार्थदीपिकायां अनंतनिरूपणे
दशमोऽध्यायः ॥ १० ॥

श्लोकाः ४२ नवश्लोकाः ३३५

---

# गीर्वाणज्ञानेश्वरी

## एकादशोऽध्यायः

इह एकादशाध्याये कथ्यते द्वैरसी कथा ।
यत्र साक्षाद्विश्वरूपं पार्थदृग्गोचरं भवेत् ॥ १ ॥
गेहे शांतरसस्यात्र प्राप्तः प्राघुणिकोऽद्भुतः ।
इतरेषां रसानां च पंक्तिलाभोऽभवत्तयोः ॥ २ ॥
लभंते सुहृदो लग्ने वस्त्रालंकारसत्कृतिम् ।
देशभाषासने तद्वद्विलसंति रसा नव ॥ ३ ॥
शांताद्भुतौ भूषितौ तु दृग्भ्यामालोचनक्षमौ ।
आलिंगनार्थं स्नेहेन प्राप्तौ हरिहराविव ॥ ४ ॥
अमावास्यादिने किंवा युक्तौ रविशशी यथा ।
तद्वच्छांताद्भुतावैक्यमायातौ प्रेमभावतः ॥ ५ ॥
गंगायमुनयोः संगे प्रयागो रसयोरभूत् ।
श्रवणस्नानमात्रेण तत्राऽभूत्पावितं जगत् ॥ ६ ॥
यत्र शांताद्भुतौ मूर्तौ गुप्ता गीतासरस्वती ।
त्रिवेणीसंगमश्चैकादशोऽध्यायः प्रयागवत् ॥ ७ ॥
अत्र श्रोत्रेंद्रियद्वारा साध्यं तीर्थावगाहनम् ।
कृतं निवृत्तिनाथेनेत्येवं ज्ञानेश्वरोऽब्रवीत् ॥ ८ ॥
गीर्वाणं गहनं मुक्त्वा बद्धः प्राकृतघट्टकः ।
अयं निवृत्तिदेवेन कृतो धर्मस्य शेवधिः ॥ ९ ॥
अतः स्नात्वात्र यः कोऽपि विश्वरूपं विलोक्य च ।
प्रयागमाधवं नत्वा मोचयेद्भवबंधनम् ॥ १० ॥
अस्त्विदं, यन्नवरसा मूर्ताश्चात्र समागताः ।
तेन श्रवणसौख्यस्य जगतो राज्यमागमत् ॥ ११ ॥

---

१ शांताद्भुताख्यरसद्वययुता. २ प्राघुणिकः=अतिथिः. ३ शेवधिः=निधिः.

अत्र शांताद्भुतौ यद्वत्प्रत्यक्षाश्चेतरे रसाः ।
अल्पेयमुपमा, मोक्षोऽप्यनायासेन लभ्यते ॥ १२ ॥
सोऽयमेकादशाध्यायो देवविश्रांतिकस्थलम् ।
तत्र प्रवेशः पार्थस्य, भाग्यस्य मुकुटो हि सः ॥ १३ ॥
गीतार्थे प्राकृते जाते भाग्यवान्पार्थ एव किम् ।
प्राकृतज्ञस्य कस्यापि स्यात्समृद्धिः सुखस्य हि ॥ १४ ॥
अतो विज्ञापयामीह विनयात्सज्जनान्प्रति ।
शृणुध्वं सावधानेन गीताव्याख्यानमुत्तमम् ॥ १५ ॥
नैवं स्नेहः संतवृंदे योग्यः स्यान्मादृशैः कृतः ।
प्रेमभावेन मन्यध्वं बालोक्तमिव मद्वचः ॥ १६ ॥
स्वशिक्षितः शुको ब्रूते तच्छ्रुत्वा चाल्यते शिरः ।
माता बालेन कुतुकं कारयित्वापि नंदति ॥ १७ ॥
तथा मदुक्ता ये शब्दाः पाठिता भवतैव ते ।
मदुक्तं भवदीयं तच्छ्रोतव्यं देव सादरम् ॥ १८ ॥
स्वामिन्वकृत्ववृक्षोऽयं रोपितो मधुरस्त्वया ।
अवधानोदकं सिक्त्वा वर्धनीयस्त्वयैव हि ॥ १९ ॥
तदंकुरसपुष्पाणि विविधार्थफलानि च ।
स्युस्त्वत्कृपाबलेनैव तेन स्यात्सुखितं जगत् ॥ २० ॥
ततोऽब्रुवन्संतजनास्तुष्टाः स्मो भाषणात्तव ।
यत्कृष्णायाऽब्रवीत्पार्थस्तदेव कथयाऽधुना ॥ २१ ॥
तदाऽवदज्ज्ञानदेवोऽहं कृष्णार्जुनभाषणम् ।
कथं वक्तुं समर्थः स्यां भवंतो दत्त वक्तृताम् ॥ २२ ॥
वनस्थैर्वानरैर्देव हतो लंकापतिस्त्वया ।
एकादशाक्षौहिणीः किं नैकः पार्थो हनिष्यति ॥ २३ ॥
कर्तुं न शक्यं श्रेष्ठानां नैवास्ति जगति क्वचित् ।
समर्थाः साधवो यूयं गीतार्थं ब्रूत मन्मुखात् ॥ २४ ॥

१ अंकुरसा=नवरसाः.

शुद्धं हि गीताभावार्थं स्वमुखेनाह केशवः ।
तमेव विशदं वच्मि शृणुध्वमवधानतः ॥ २५ ॥
गीताग्रंथश्च धन्योऽयं वेदसंवेद्यदैवतम् ।
यं स्वयं भगवान्कृष्णो वक्तास्याऽखिलशक्तिमान् ॥ २६ ॥
तन्महत्त्वं कथं वच्मि यः शिवस्यापि दुर्गमः ।
अतो भावेन गीतायै नमस्कुर्यामिदं वरम् ॥ २७ ॥
अस्त्विदं, सोऽर्जुनो दृष्टिं विश्वरूपे निवेशयन् ।
अकरोत्प्रथमं प्रश्नं तं शृणुध्वं वदामि वः ॥ २८ ॥
सृष्टिः सर्वेश्वरमयीत्येवं बोधो यथांतरे ।
तथा बहिर्गोचरः स्यादित्यैच्छत्पांडवस्ततः ॥ २९ ॥
सत्यप्येवं स्थिते पार्थस्तदुक्तौ प्राप संकटम् ।
विश्वरूपं दर्शयेति पृच्छेयं केशवं कथम् ॥ ३० ॥
एतावंतं न केनापि पृष्टं भक्तेन यत्कचित् ।
तन्मयाऽद्य कथं वाच्यं प्रत्यक्षं कथयेति तम् ॥ ३१ ॥
यद्यप्यहं कृष्णमित्रं देवक्या नाधिकः क्वचित् ।
सा मातापि च यत्प्रष्टुमविभेदधिकारिणी ॥ ३२ ॥
मत्तो यद्यपि सेवाऽभूत्सा किं गरुडवद्भवेत् ।
सोऽप्येवं नोकवान्देवं विश्वरूपप्रदर्शने ॥ ३३ ॥
सनकाद्या महांतोऽपि नापृच्छन्निकटस्थिताः ।
व्रजवासिजनेभ्योऽपि कथं प्रेम्णाधिकोऽस्म्यहम् ॥ ३४ ॥
ते वंचितास्तु बाल्येनाऽवरीपार्थं च गर्भगः ।
सुरक्षितं विश्वरूपं न कस्यापि प्रदर्शितम् ॥ ३५ ॥
एवं यदत्यंतगूढं कृष्णहृत्स्थं वदेति तम् ।
मया कथं तत्प्रष्टव्यमिति न ज्ञायते यतः ॥ ३६ ॥
न प्रष्टव्यं तदा विश्वरूपदर्शनमंतरा ।
अस्वस्थचित्तो जीवामि तदप्यत्यंतदुर्घटम् ॥ ३७ ॥
अतः पुराल्पं पृच्छामि ततो देवेच्छयाऽधिकम् ।
एवं विचार्य पुरतः पार्थः प्रोवाच भीतवत् ॥ ३८ ॥

ततश्चातुर्यतोऽपृच्छद्यथा शब्दद्वयोत्तरम् ।
दर्शयेत्तद्धृषीकेशो विश्वरूपं यथातथम् ॥ ३९ ॥
वत्सं दृष्ट्वा यथा धेनुरचिष्टत्येव संभ्रमात् ।
मुखे धृते स्तने क्षीरस्रुतिर्नावरितुं क्षमा ॥ ४० ॥
पांडवानां रक्षणायाधावत्कृष्णो वनांतरे ।
स पार्थेन कृते प्रश्ने न दद्यादुत्तरं कथम् ॥ ४१ ॥
कृष्णः साक्षात्स्नेहरूपः पार्थश्च स्नेहपोषकः ।
एवमैक्ये तयोर्द्वौ हि भिन्नौ स्तश्चित्रमेव तत् ॥ ४२ ॥
अतः पार्थवचः श्रुत्वा कृष्णः स्याद्विश्वरूपधृक् ।
सावधानतया तस्मात्प्रसंगं शृणुतादरात् ॥ ४३ ॥

अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

ततः पार्थोऽवदत्कृष्णं शब्दातीतं दयानिधे ।
भवता तन्नमप्युक्तं मदर्थे कृपया त्वया ॥ ४४ ॥
भूतानि यं लयं यांति जीवमाये प्रणश्यतः ।
या स्याद्ब्रह्मस्थितिस्तत्र तत्स्वीयं रूपमंतिमम् ॥ ४५ ॥
रक्षितं भवता शश्वद्गूढं हृदयमंदिरे ।
वेदेभ्योऽपि परं यच्च सुदूरे रक्षितं त्वया ॥ ४६ ॥
तदद्य हृदयं स्वीयं मत्पुरः प्रकटीकृतम् ।
शंकरेण निजैश्वर्यं ज्ञानायारातिकीकृतम् ॥ ४७ ॥
स्वामिंस्तदद्य सहजं लीलयैव ममार्पितम् ।
तत्त्वया दत्तमित्युक्तौ भेदः स्यात्पुरतः स्थितः ॥ ४८ ॥
महापूरे ब्रुडंतं मां दृष्ट्वा धृत्वा शिखां करे ।
निष्कासितो दयासिंधो निमज्ज्य स्वयमंततः ॥ ४९ ॥
त्वां विना न जगत्यस्मिन्द्वितीयं वस्तु विद्यते ।
परं दुर्दैवमस्माकं यदहंकारमाश्रिताः ॥ ५० ॥

महान्जगत्यर्जुनोऽहमिति देहाभिमानतः।
कौरवानप्याप्तजनान्मत्वाऽऽसं स्वीयभावतः ॥ ५१ ॥
यान्हत्वा तेन पापेन किं वा भुंजीय शासनम् ।
पश्यंतमेवं दुःस्वप्नं सावधानः कृतः प्रभो ॥ ५२ ॥
यथा कश्चिद्गृहं त्यक्त्वा गंधर्वनगरं व्रजेत् ।
किंवा त्यक्त्वा जलं गच्छेत्पातुं मृगजलं यथा ॥ ५३ ॥
दृष्ट्वा वस्त्रात्मकं सर्पं भयकंपार्दितं यथा ।
म्रियमाणं च संरक्ष्य श्रेयः संपादितं त्वया ॥ ५४ ॥
प्रतिबिंबं जले दृष्ट्वा पतन्सिंहो जलाशये ।
रक्षणीयो यथाऽनंत रक्षितोऽहं तथा त्वया ॥ ५५ ॥
एतावंतं तथैवासीन्निश्चयोऽपि ममांतरे ।
यत्सप्त सागराश्चेह श्रीहरे संयुता अपि ॥ ५६ ॥
सर्वापि त्रुटिता सृष्टिराकाशस्त्रुटितोऽपि वा ।
तथापि गोत्रजैर्युद्धप्रसंगो मास्तु सर्वथा ॥ ५७ ॥
एवं ह्यहंकारबद्धो ब्रुडितश्चाग्रहोदके ।
यस्मासीत्प्रसंगे त्वं निकटे रक्षकः स्थितः ॥ ५८ ॥
यन्मिथ्या मानितं स्वीयं गोत्रजादि च कल्पितम् ।
मिथ्यापिशाचग्रस्तोऽहं भवतैव सुरक्षितः ॥ ५९ ॥
पूर्वं लाक्षागृहान्मुक्तावासीद्देहे भयं तदा ।
इदमन्यद्बहिर्दुःखं चैतन्यं लोपयेदपि ॥ ६० ॥
दुराग्रहहिरण्याक्षः कक्षीकृत्य च धीभुवम् ।
मोहार्णवगवाक्षेण निःसृतोऽभूदितस्ततः ॥ ६१ ॥
स्वस्थानमाप्ता सा बुद्धिर्भवत्सामर्थ्यतः किल ।
प्राप्तं कृष्ण द्वितीयं त्वां वराहाकृतिधारणम् ॥ ६२ ॥
तव कीर्तिरपारास्ति मूकोऽहं वच्मि तत्कियत् ।
मह्यं प्राणाश्च पञ्चापि निश्चयादर्पितास्त्वया ॥ ६३ ॥
भवच्छ्रमा न च व्यर्था देव लब्धं त्वया यशः ।
यत्समूलं ममाज्ञानमगच्छन्नाशकारकम् ॥ ६४ ॥

आनंदजलकह्लारे कृपादृष्टिरियं हरे ।
स्वकृपामंदिरे दद्यादाश्रयं येभ्य एव हि ॥ ६५ ॥
तेभ्यो जातो मोह इति क्षुद्रा वार्ता कथं भवेत् ।
वडवाग्निं शमयितुं शक्तं मृगजलं किमु ॥ ६६ ॥
श्रीमदहमपि प्राप्य यत्कृपामंदिरं तव ।
लिहन्ब्रह्मरसास्वादं न्यवसं पूर्वपुण्यतः ॥ ६७ ॥
तेन मोहो लयं यातस्तत्किमाश्चर्यकारकम् ।
कथयामि भवत्पादौ धृत्वोद्धारोऽभवन्मम ॥ ६८ ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

श्रीकृष्ण पुंडरीकाक्ष कोटिसूर्यसमप्रभ ।
तत्त्वं तव मुखांभोजाच्छ्रुतमद्य दयाघन ॥ ६९ ॥
उत्पद्यंते यतो जीवा लयं वा यांति यत्र ते ।
सा विस्तरेण प्रकृतिरुक्ता देवेन मां प्रति ॥ ७० ॥
साद्यंतमुक्ता प्रकृतिर्दर्शिता ब्रह्मणः स्थितिः ।
प्रावृत्य यस्य माहात्म्यं वेदा आसन्सुशोभिताः ॥ ७१ ॥
यस्माज्जाता इमे वेदा धर्मरत्नान्यसूपुवन् ।
भवत्पादाश्रयेणैव वरीभूतति वैभवात् ॥ ७२ ॥
अगाधं तव माहात्म्यं मार्गैर्लभ्यं तथाखिलैः ।
आत्मानुभावेन रम्यं दर्शितं भवता मम ॥ ७३ ॥
निरभ्रे च यथाकाशे स्पष्टं स्यात्सूर्यमंडलम् ।
शैवालोत्सारणे यद्वन्निर्मलं दृश्यते जलम् ॥ ७४ ॥
चंदनालिंगनं शक्यं त्याजिते सर्पवेष्टने ।
किंवा पिशाचे नष्टेऽपि निधानं हस्तगं भवेत् ॥ ७५ ॥
ज्ञानावृतौ या मायासीत्सा त्यक्ता दूरतस्त्वया ।
ततो मम मतिश्चाद्य परब्रह्मणि संगता ॥ ७६ ॥
एतस्मिन्विषये चित्ते पूर्णो विश्वास आगतः ।

तथापि श्रीपते काचिदुत्पन्नान्यैव वासना ॥ ७७ ॥
तां यदि त्वां न पृच्छेयं कं वाऽन्यं वच्मि तत्कृते ।
त्वां विनाप्याश्रयस्थानमस्त्यन्यद्यत्रकुत्र वा ॥ ७८ ॥
जलाधारा जलचरा बालकाः स्तन्यकांक्षिणः ।
तद्धित्वा प्राणितुं योग्यमस्ति किं वान्यसाधनम् ॥ ७९ ॥
संकटे त्यज्य संकोचं पृच्छामि त्वां मनोगतम् ।
कृष्णोऽब्रवीदलं स्तुत्या यत्प्रष्टव्यं वदस्व तत् ॥ ८० ॥

एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

तदाऽवदत्किरीटी च या वार्ता कथितात्वया ।
तत्प्रत्ययेनापि दृष्टिः शांताऽऽसीत्तवैया मम ॥ ८१ ॥
यत्संकल्पेन त्रैलोक्यं भूत्वा प्राप्नोति वा लयम् ।
स्थानतदपि मद्रूपमेवं वदसि यत्क्वचित् ॥ ८२ ॥
यतस्तन्मूलरूपं ते देवकार्यमिषेण हि ।
यस्माच्चतुर्भुजः किंवा भवसि द्विभुजः स्वतः ८३ ॥
क्षीराब्धौ शेषशायी सन्मत्स्यकूर्मादिरूपधृक् ।
कृत्वेष्टकार्यं च पुनर्यत्र तिष्ठसि संततम् ॥ ८४ ॥
यं गायंत्युपनिषदो हृदि ध्यायंति योगिनः ।
आलिंग्य सनकाद्या यं तिष्ठंत्यानंदपूरिताः ॥ ८५ ॥
यदगाधं चक्रपाणे विश्वरूपं तव श्रुतम् ।
तदालोचयितुं साक्षाद्दृग्भ्यां संत्वरते मनः ॥ ८६ ॥
निःसंकोचं यथा कृष्ण पृष्टा मद्वासना त्वया ।
इयमेका मम हृदि प्रबलेच्छाद्य वर्तते ॥ ८७ ॥
यत्साग्रं विश्वरूपं ते मम स्याद्दृष्टिगोचरम् ।
एवं चित्तेऽभवद्ध्यासो जागरूको ह्यनारतम् ॥ ८८ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

शार्ङ्गिन्नेकास्ति शंका मे विश्वरूपावलोकने ।
योग्यता विद्यते किंवा नास्तीति भगवन्मयि ॥ ८९ ॥
नाहं वेद्मि मदीयं तद्देव त्वं यदि पृच्छसि ।
किं वा रुग्णः स्वं निदानं वेत्ति रोगस्य कुत्रचित् ॥ ९० ॥
कार्यार्थीच्छाभरे वेत्ति न कश्चित्स्वीययोग्यताम् ।
यथा तृषार्तो न ब्रूते सिंधुवज्जलमप्यलम् ॥ ९१ ॥
पयसिच्छाभरेणाद्य चित्तं जातमनावरम् ।
तथापि बालकस्यार्तं माता जानाति तत्त्वतः ॥ ९२ ॥
जनार्दन तथा पूर्वमधिकारं निरीक्ष्य मे ।
दर्शनं विश्वरूपस्य मां कारय दयानिधे ॥ ९३ ॥
तथास्ति चेत्कुरु कृपां नो चेत्वं ब्रूहि नेत्यपि ।
पंचमालापजं सौख्यं बधिरः कथमाप्नुयात् ॥ ९४ ॥
न वृष्टिश्चातकार्थं हि यत्तर्पयति सा जगत् ।
सैव व्यर्था भवेद्वृष्टा प्रस्तरप्रायभूतले ॥ ९५ ॥
चंद्रामृतं चकोरोऽस्ति तत्र कोऽन्यान्निवारयेत् ।
यथा वा दृष्टिहीनस्य प्रकाशोऽपि वृथैव हि ॥ ९६ ॥
तस्मान्निश्चयतो विश्वरूपं दर्शयसीति माम् ।
सौम्यं वाप्युग्ररूपं वा त्वं हि दर्शयितुं क्षमः ॥ ९७ ॥
तवौदार्यं च सुमहन्न पात्रापात्रभावना ।
दानप्रसंगे वैरिभ्य. कैवल्यं प्रददासि च ॥ ९८ ॥
निश्चयाद्दुर्लभो मोक्षस्त्वत्पदाराधकोऽस्ति सः ।
आज्ञापयसि तं यत्र तत्र याति स दासवत् ॥ ९९ ॥
विषस्तनं पाययितुं प्राप्ता यद्यपि पूतना ।
सापि मोक्षपदं नीता यत्त्वया सनकादिवत् ॥ १०० ॥
राजसूये सभास्तारमंडितायां सदस्यपि ।
शतधा दुर्वचोभिस्त्वं शिशुपालेन दूषितः ॥ १०१ ॥
अपराध्यपि गोपाल स मोक्षं प्रापितस्त्वया ।
औत्तानपादिः किं पार्थं ध्रुवोज्ज्वलपदं प्रति ॥ १०२ ॥

यः पैतृकपदप्राप्त्यै तपस्तप्तुं गतो वनम् ।
अच्युतं सूर्यचंद्राभ्यां तस्मै दत्तं पदं त्वया ॥ १०३ ॥
एवं विपत्तिग्रस्तानां दानशूरोऽसि माधव ।
नारायणोच्चारमात्रान्मोचितोऽजामिलस्त्वया ॥ १०४ ॥
एदा प्रहर्तुर्विप्रस्य लक्ष्म वक्षस्थले धृतम् ।
शंखासुरशरीरोत्थो धृतः शंखस्त्वया करे ॥ १०५ ॥
अपकारिपूपकारी दाताऽपात्रेऽप्युदारराट् ।
दानं स्वीकृत्य जातोऽसि द्वारपालो बलेर्गृहे ॥ १०६ ॥
आजुहाव भवन्नाम्ना क्रीडार्थं पालितं शुकम् ।
सा वेश्यापि त्वया नीता वैकुंठभुवनं स्वकम् ॥ १०७ ॥
त्वमेवं क्षुद्रभक्तेभ्यो मोक्षं दत्से सुदुर्लभम् ।
मां कथं भिन्नभावेन स्वभक्तं स्थापयिष्यसि ॥ १०८ ॥
अहो आप्यायते यस्याः पयःपूरेण वै जगत् ।
तिष्ठंति किं कामधेनोस्तस्या वत्सा बुभुक्षिताः ॥ १०९ ॥
तस्मान्मत्प्रार्थितं रूपं मां न दर्शयसीति न ।
तज्ज्ञातुमथवा द्रष्टुं पात्रतां देह्यनुग्रहात् ॥ ११० ॥
विश्वरूपावलोकाय दृष्टिर्योग्या ममास्ति चेत् ।
तर्हि मद्वासनां देव कृपया पूरयैकदा ॥ १११ ॥
एवं पार्थस्य विज्ञप्तिं श्रुत्वाऽश्रुत्वापि तत्क्षणे ।
षड्गुणैश्वर्यसंपन्नो देवस्तत्प्रवणोऽभवत् ॥ ११२ ॥
शौरेः कृपामेघवृष्टो पार्थो वर्षर्तुरागमत् ।
कृष्णोऽकूजत्कोकिलवद्वसंतस्तत्र चार्जुनः ॥ ११३ ॥
दर्शने पूर्णचंद्रस्य क्षीराब्धिः पूरितो भवेत् ।
तथा द्विगुणितप्रेम्णा चक्रपाणिर्भृतोऽभवत् ॥ ११४ ॥
ततः कृपावान्श्रीकृष्णः प्रेम्णोच्चैः संजगर्ज च ।
उवाच पार्थ रूपाणि ममालोकय नैकदाः ॥ ११५ ॥
एकयाम्येकं विश्वरूपमिति पार्थस्य कांक्षितम् ।
तथापि सर्वं कृष्णेन विश्वरूपमयं कृतम् ॥ ११६ ॥

महानुदारः श्रीकृष्णो भक्तेष्टं पूरयत्ययम् ।
स्वीयं ददाति सर्वस्वं सहस्रगुणितं स्वयम् ॥ ११७ ॥
न दर्शितं यच्छेपाय वेदेभ्योऽपि न दर्शितम् ।
प्रेयस्या अपि यल्लक्ष्म्या विश्वरूपं न दर्शितम् ॥ ११८ ॥
विविधैश्च प्रकारैस्तद्धरिः स्पष्टमदर्शयत् ।
धनुर्धरस्य सुमहद्भाग्यं तत्रात्र संशयः ॥ ११९ ॥
जागृतः प्रव्रजेत्स्वप्नं स स्यात्स्वप्नमयस्तदा ।
तथाऽनन्तस्तत्समयेऽभवद्ब्रह्माण्डरूपधृक् ॥ १२० ॥
निस्यमुद्रां ततस्त्यक्त्वा मुक्त्वा जवनिकावृतिम्[1] ।
किंवा स्वं योगसामर्थ्यं स्पष्टं प्रकटितं तदा ॥ १२१ ॥
तद्द्रष्टुं शक्नुयात्पार्थो नवेति न विचार्य च ।
तत्कालमुक्तवान्विश्वरूपं पाहीति पांडवम् ॥ १२२ ॥

श्रीभगवानुवाच ।

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

एकं रूपं दर्शयेति त्वयोक्तं यत्तथा कृतौ ।
किं कृतं स्यादतः सर्वं दर्शयामि मदात्मकम् ॥ १२३ ॥
केचित्स्थूलाः कृशाः केचिद्विशाला लघवोऽपि हि ।
पृथवः सरलाः केचिदमर्यादाश्च केचन ॥ १२४ ॥
अनावराः प्रांजलाश्च सव्यापाराश्च निश्चलाः ।
उदासीनाः स्नेहवंतस्तीव्रशीलाश्च केचन ॥ १२५ ॥
घूर्णिताः सावधानाश्च गंभीराः शीघ्रकारिणः ।
उदाराः कृपणाश्चैव तामसा अपि केचन ॥ १२६ ॥
शांताः केचित्तथा मंदाः स्तब्धाश्चानंदसंयुताः ।
सशब्दाश्चापि निःशब्दाः सौम्यरूपाश्च केचन ॥ १२७ ॥

१ तिरस्करिण्या आवरणम् ।

साभिलाषा विरक्ताश्च जागृताः केऽपि निद्रिताः ।
सुखिनो दुःखिनश्चैव प्रसन्नाः केचिदर्जुन ॥ १२८ ॥
अशस्त्राश्च सशस्त्राश्च रौद्रा मित्राणि केचन ।
भयानका विचित्राश्च समाधिस्थास्तथा परे ॥ १२९ ॥
उत्पत्तिकर्मसंलुब्धाः केचित्स्नेहेन पालकाः ।
केचित्संहारकाश्चापि साक्षिभूताश्च केचन ॥ १३० ॥
एवं नानाविधाः सर्वे दिव्यतेजःप्रकाशिनः ।
विभिन्नवर्णाः सर्वेके विज्ञेया मत्स्वरूपवत् ॥ १३१ ॥
तप्तस्वर्णनिभाः केचिद्वर्णतः कपिलाः कति ।
केचित्सिंदूरवर्णाभाः संध्यारुणनिभास्तथा ॥ १३२ ॥
स्वभावसुंदराः केचित्सद्रत्नैः खचिता इव ।
केचित्कुंकुमवर्णाश्चाऽरुणोदयसमप्रभाः ॥ १३३ ॥
केचित्स्फटिकसंकाशा इंद्रनीलनिभाः कचित् ।
कृष्णवर्णाः कज्जलाभा रक्तवर्णाश्च केचन ॥ १३४ ॥
तप्तहेमसमाः पीता नीलमेघनिभाः कति ।
स्वर्णचंपकसंकाशा हरिताश्चापि केचन ॥ १३५ ॥
तप्तताम्रसमाः केचिच्चंद्राभा धवलाः कति ।
एवं बहुविधान्सर्वान्धनुर्धर विलोकय ॥ १३६ ॥
यथा सर्वे भिन्नवर्णा आकृत्या पृथगेव च ।
येषां सौंदर्यमालोक्य मदनः शरणं ययौ ॥ १३७ ॥
केचिच्च सुंदराकारास्तेजःपुंजा मनोहराः ।
श्रियोऽलंकारभांडारनिभाः संपद्विभूषिताः ॥ १३८ ॥
सुपुष्टा मांसलाः केचिद्विकरालाः कृशाः कति ।
लंबकंठाः स्थिताः केचिद्दीर्घशीर्षा भयंकराः ॥ १३९ ॥
एवमाकृतयोऽनंता अपाराश्च दिदृक्षताम् ।
प्रत्येकावयवप्रांते पार्थ सर्वं जगद्भृतम् ॥ १४० ॥

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

मन्नेत्रोन्मीलनं यत्र स्युस्तत्रादित्यसृष्टयः ।
दृष्टेर्निमीलने देवा लयं यांत्यखिला अपि ॥ १४१ ॥
मुखानिले समुद्भूते ज्वालामालाकुले ततः ।
उत्पद्यंतेऽष्टवसवो ज्वालाभ्यः संघशोऽखिलाः ॥ १४२ ॥
कोपाविष्टे सति मयि भ्रूप्रांतैक्यं यदा भवेत् ।
तदैकादशरुद्राणामुत्पद्यन्ते गणाः समम् ॥ १४३ ॥
उत्पद्यंतेऽश्विनौ देवाः शतशः सौम्यतेजसा ।
वायवश्चापि जायंते श्रोत्रतोऽर्जुन नैकशः ॥ १४४ ॥
एकैकावयवात्तेषां सुरसिद्धकुलान्यपि ।
भवंति सुविशालानि पश्य रूपाणि नैकशः ॥ १४५ ॥
यत्र मूकाः श्रुतिगणाः कालायुर्द्रष्टुमल्पकम् ।
यस्यांतपारः कुत्रापि ब्रह्मणोऽपि न लभ्यते ॥ १४६ ॥
वेदत्रयेणाश्रुतानि पश्य रूपाण्यनेकशः ।
आश्चर्यजनकान्यत्र कौतुकान्यवलोकय ॥ १४७ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

मूर्तीनां रोमकूपेषु पश्य सृष्टिं तथाऽखिलाम् ।
यथा कल्पद्रुच्छायायां समुत्पन्नास्तृणांकुराः ॥ १४८ ॥
यथा गवाक्षप्रकाशे दृश्यंते परमाणवः ।
तथा संधिष्विंद्रियाणां ब्रह्मांडं परिवर्तते ॥ १४९ ॥
अत्रस्यैकप्रदेशेऽपि विश्वं पश्य सविस्तरम् ।
ततः परं चेन्मनसि पश्येयमिति वासना ॥ १५० ॥
तथा तद्विलयेऽप्यत्र सर्वथा नैव संकटम् ।
यदीप्सितं तत्सकलं मद्देहे पश्यसि स्वयम् ॥ १५१ ॥
एवं कारुण्यपूर्णेन यदोक्तं विश्वमूर्तिना ।
तदाऽर्जुनोऽभवन्मूको दृष्टं वा नेति नोक्तवान् ॥ १५२ ॥
कथमेवमयं स्वस्थः कृष्णेनालोचितोऽर्जुनः ।
तदापि पूर्ववद्विश्वरूपदर्शनलालसः ॥ १५३ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

अस्योत्कंठा न शांताऽभूद्वृत्तिर्न सुखितापि च ।
दर्शितां विश्वसृष्टिं च नायं द्रष्टुं क्षमोऽभवत् ॥ १५४ ॥
इत्थं ज्ञात्वा हसन्देवः कौतुकादेवमुक्तवान् ।
दर्शितं ते विश्वरूपं परं त्वं तन्न पश्यसि ॥ १५५ ॥
तदाऽर्जुनोऽब्रवीद्देव कं प्रत्यूनं समागतम् ।
प्रयच्छसि चकोरायास्तु त्वं किं चंद्रकरामृतम् ॥ १५६ ॥
छित्वा निर्मलमादर्शं यथांधाय प्रदर्शयेत् ।
अथवोत्कृष्टगीतं किं योग्यं बधिरसंनिधौ ॥ १५७ ॥
किंवा कमलकिंजल्कं मंडूकोऽर्हति भक्षितुम् ।
अस्थाने तद्वथाभूते शार्ङ्गिन् कुप्येत कं वद ॥ १५८ ॥
तथात्रातींद्रियज्ञानमालोच्यं ज्ञानचक्षुषा ।
सद्धर्मचक्षुषा देव पश्येयाहं कथं प्रभो ॥ १५९ ॥
तथैव न्यूनता सेति नोक्त्वा सोढव्यमेव तत् ।
श्रीकृष्णोऽप्यब्रवीत्पार्थ त्वदुक्तं मान्यमेव मे ॥ १६० ॥
विश्वरूपं दर्शयितुं शक्तिर्देया पुरैव ते ।
परं प्रेमभरादद्य संवादे विस्मृतोऽस्म्यहम् ॥ १६१ ॥
उप्ते ह्यकर्षितक्षेत्रे बीजं भवति तद्वृथा ।
तस्माद्द्रष्टुं विश्वरूपं दिव्यां दृष्टिं ददामि ते ॥ १६२ ॥
तया दृक्ष्यैश्वर्ययोगमखिलं विश्वविस्तृतम् ।
पश्यसि त्वमनायासात्स्वयं चानुभविष्यसि ॥ १६३ ॥
एवं वेदांतसंवेद्यः श्रीकृष्णोऽखिलवंदितः ।
आद्यस्थानः श्रीभगवानुक्तवानर्जुनं प्रति ॥ १६४ ॥

संजय उवाच ।

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

संजयो धृतराष्ट्राय वक्ति चित्रं विभाति मे ।
कोऽस्ति लक्ष्म्याः सुदैवेनाऽधिको लोके विचारय ॥ १६५ ॥
वर्णितुं सूत्ररूपेण समर्थः कः श्रुतिं विना ।
शेषं विना वेत्ति को वा यः सम्यग्दास्यलक्षणम् ॥ १६६ ॥
को द्वितीयोऽस्ति वा लोके सेवको गरुडोपमः ।
भगवत्प्राप्तिलोभेन यः सेवां कुरुतेऽनिशम् ॥ १६७ ॥
किं ब्रवीम्यस्त्विदं दूरे, पांडवानां समुद्भवः ।
यद्दिनाद्भवत्तस्मादाप्तं कृष्णसुखं हि तैः ॥ १६८ ॥
स्निग्धेषु तेष्वर्जुनेन कृष्णोऽत्यंतं वशीकृतः ।
यथा करोति हार्देन कामिनं कामिनी वशे ॥ १६९ ॥
न वक्ति पाठितः पक्षी न स्यादाज्ञानुगो मृगः ।
भाग्योदयोऽयं पार्थस्य यदभूद्भगवान्वशे ॥ १७० ॥
द्रष्टुं साक्षात्परंब्रह्म दत्ते पार्थाय चक्षुषी ।
अर्जुनोक्तं यत्किमपि कृष्णः पूरयति स्वयम् ॥ १७१ ॥
पार्थं क्रुद्धेऽपि यः शांतो रुष्टे संभावयत्यपि ।
अभूद्वशंवदस्तस्य तदाश्चर्यं विभाति मे ॥ १७२ ॥
गर्भतस्त्यागिनोऽभूवन्ख्यातिमंतः शुकादयः ।
तथापि सर्वे मोक्षार्थमस्तुवन्कृष्णमेव हि ॥ १७३ ॥
समाधौ योगिभिर्ध्येयः पार्थाधीनो बभूव यः ।
तद्विस्मितमभूद्राजन्धृतराष्ट्र मनो मम ॥ १७४ ॥
संजयः पुनरप्याह राजानं कोऽत्र विस्मयः ।
सानुकूले चक्रपाणावेवं भाग्योदयो भवेत् ॥ १७५ ॥
आस्तां तदाऽब्रवीद्देवो दिव्यदृष्टिं ददामि ते ।
यथा सांगं विश्वरूपं पश्यसि त्वं पृथासुत ॥ १७६ ॥
कृष्णाननादक्षराणि निःसृतानि ततः क्षणात् ।
ध्वस्तमज्ञानपटलमर्जुनस्य हृदि स्थितम् ॥ १७७ ॥
ज्ञानदेवः कथयति तानि नैवाक्षराणि हि ।
किंतु पार्थाय कृष्णेनोद्दीप्ता चिद्रूपदीपिका ॥ १७८ ॥

तद्दिव्यदृक्प्रकाशेन ज्ञानदृष्टिर्विकासिता ।
दर्शनं विश्वरूपस्य कृष्णेन प्रकटीकृतम् ॥ १७९ ॥
प्रभोः सर्वेऽवताराश्च तरंगा विश्ववारिधेः ।
यत्तेजःकिरणैः किंवा विश्वं मृगजलायितम् ॥ १८० ॥
अनादिभूमिकायां च चित्रीभूतं चराचरम् ।
दर्शयामास पार्थाय कौतुकाच्छ्रीहरिः स्वयम् ॥ १८१ ॥
पूर्वं मृद्भक्षणे बाल्ये तद्वयस्यैर्निवेदिते ।
यशोदा क्रोधसंयुक्ता त्वां दधार यदा करे ॥ १८२ ॥
तदा भीत इवात्यर्थं मुखं व्यादाय तत्पुरः ।
त्वयांतरे दर्शितानि भुवनानि चतुर्दश ॥ १८३ ॥
भुवगह्ले मधुवने कंबुः स्पृष्टो यदा त्वया ।
स तदैवास्तवं चक्रे वेदातीतमनल्पधीः ॥ १८४ ॥
राजन् श्रीहरिणानल्पोऽनुग्रहो विहितो यदा ।
तदार्जुनोऽपि नाज्ञासीदविद्या क्व गतेति सः ॥ १८५ ॥
दृष्ट्वाऽकस्माद्दिव्यतेजश्चमत्कारकरं तदा ।
पार्थस्य मानसं मग्नमभवद्विस्मयेन हि ॥ १८६ ॥
प्रलयेंऽबुमये यद्वन्मार्कंडेयो विलुंठति ।
तथाऽलुठत्पंडुपुत्रो विश्वरूपकुतूहले ॥ १८७ ॥
महदासीद्यद्गगनं क्व च तद्विलयं गतम् ।
चराचराणि भूतानि क्वांतर्धानं गतानि च ॥ १८८ ॥
दृश्यंते न दिशां प्रांता नाधोर्ध्वमपि दृश्यते ।
स्वप्नाज्जागरवल्लुप्ता सृष्टिरासीत्तदाऽखिला ॥ १८९ ॥
सूर्ये प्रदीप्ते लुप्ताः स्युर्यथा वा चंद्रतारकाः ।
तथा विश्वस्वरूपेणाऽलुप्तत्सृष्टिस्तथाऽखिला ॥ १९० ॥
मनस्त्वं मनसो यातं प्रज्ञाऽस्वाधीनतां गता ।
अभूदिंद्रियवृत्तीनां तेजसामैक्यमंतरे ॥ १९१ ॥
समाधिं याता समाधिः स्वस्मिन्नेकाग्रता गता ।
भासते विज्ञानशक्तेर्मोहिनी सर्वथाऽप्रसत् ॥ १९२ ॥

एवमाश्चर्यचकितो भूत्वाऽपश्यदितस्ततः ।
तदा चतुर्बाहुरूपाण्यनंतान्यभवन्प्रभोः ॥ १९३ ॥
वर्षासु च यथा मेघाः प्रलयोत्थोऽर्क एव वा ।
तदाऽन्यत्तत्स्वरूपेभ्यः किमप्युर्वरितं न हि ॥ १९४ ॥
कृष्णस्वरूपमालोच्य पूर्वं शांतिमगात्स्वयम् ।
दृष्टिमुन्मील्य चापश्यद्विश्वरूपं तदाऽखिलम् ॥ १९५ ॥
आस्था याऽसीद्विश्वरूपं दृग्भ्यां पश्येय शार्ङ्गिणः ।
पार्थस्य पूरिता साऽद्य साक्षाद्भगवता स्वयम् ॥ १९६ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

रमेशाभुवनानीवाऽपश्यद्वक्त्राण्यनेकशः ।
लावण्यश्रीनिधानानि पांडवोऽपश्यदेकदा ॥ १९७ ॥
प्रफुल्लमानंदवनं सौंदर्यं प्राप राजताम् ।
अपश्यदेवं वक्त्राणि श्रीहरेः पांडवस्तदा ॥ १९८ ॥
तत्र प्रत्येकवदने सैन्यानि भयदान्यपि ।
कालरात्रेश्च सैन्यानि युद्धोद्युक्तानि दृष्टवान् ॥ १९९ ॥
तानि मृत्योर्मुखानीव भयदुर्गाण्यनेकशः ।
किंवोन्मुखानि कुंडानि प्रलयाग्नेरितस्ततः ॥ २०० ॥
भयानकान्यद्भुतानि सौम्यान्याश्चर्यवन्ति च ।
कियंति भूपायुक्तानि पार्थेनालोचितानि हि ॥ २०१ ॥
ज्ञानदृष्ट्याऽऽलोकनेऽपि मुखानां नांतमभ्यगात् ।
ततः कौतुकया दृष्ट्वा नेत्रे चालोकयत्तदा ॥ २०२ ॥
नैकवर्णानि फुल्लानि नेत्राब्जानि तदाऽर्जुनः ।
तानि प्रखरसूर्यादिनिभानीव व्यलोकयत् ॥ २०३ ॥
श्याममेघघटामध्येऽस्फुरद्विद्युन्निभानि च ।
अग्निवत्पीतनेत्राणि पार्थोऽपश्यद्भुवोरधः ॥ २०४ ॥
तस्यैकस्मिन्नवयवे दृष्ट्वा पार्थो ह्यपूर्वताम् ।
उवाच विश्वरूपेऽस्मिन्दर्शयेयुः कुतुकान्यलम् ॥ २०५ ॥

अकल्पयन्मनस्येवं तद्धस्तौ मुकुटः क च।
सर्वांगदर्शनाकांक्षा पांडवस्याप्यवीवृधत् ॥ २०६ ॥
भाग्यवानस्ति पार्थोऽयं नास्य व्यर्था मनोरथाः ।
किं शंकरस्य तूणीरे संति मोघाः शिलीमुखाः ॥ २०७ ॥
ब्रह्मणो वाचि मिथ्या किमक्षराणि वसंति हि ।
यदेवं विश्वरूपस्य दर्शनं लब्धवानसौ ॥ २०८ ॥
वेदा विदुर्न यस्यांतं तत्सर्वेऽवयवाः कथम् ।
एकदैव स्वनेत्राभ्यां पार्थोऽपश्यत्तु भाग्यतः ॥ २०९ ॥
चरणादिकिरीटांतं रत्नभूषणमंडितम् ।
विश्वरूपं सुशोभाढ्यमपश्यत्पांडवस्तदा ॥ २१० ॥
धृतानि ब्रह्मणा ब्राह्मभूषणान्येव चेत्तदा ।
तस्य शोभां वर्णयितुं मादृशः शक्नुयात्कथम् ॥ २११ ॥
प्रकाशस्तेजसा येन प्राप्यते चंद्रसूर्ययोः ।
तदेव विद्यते तेजोऽखिलविश्वस्य जीवनम् ॥ २१२ ॥
अलंकृतं तु यत्तेन तद्द्रष्टुं कः क्षमो भवेत् ।
ब्रह्मणाऽलंकृतं ब्रह्म द्रष्टुं पार्थः क्षमोऽभवत् ॥ २१३ ॥
सशस्त्रौ सरलौ हस्तावपश्यज्ज्ञानचक्षुषा ।
शस्त्राणि प्रलयज्वालाछेदकानि ज्वलंत्यपि ॥ २१४ ॥
स्वयमंगमलंकारा हस्तौ शस्त्राण्यपि स्वयम् ।
स्वयं जीवः शरीरं च सृष्टिर्ब्रह्मापि च स्वयम् ॥ २१५ ॥
प्रखरैः किरणैर्यस्य भानां लाजा भवन्ति हि ।
तत्तापेनार्दितो वह्निः सागरं यातुमिच्छति ॥ २१६ ॥
महाविषं समुद्भूतं विजयस्योदितं वनम् ।
उत्थापिताः सशस्त्राश्च दृष्टा हस्ताः सहस्रशः ॥ २१७ ॥

दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ।
सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥ ११ ॥

व्यलोकयत्ततो दृष्ट्वा कंठं मुकुटमेव च ।
ततश्च कल्पवृक्षाणां जातां सृष्टिं ददर्श सः ॥ २१८ ॥

महासिद्धेर्मूलपीठं लक्ष्मीः श्रांताऽभवद्यतः ।
पुष्पाण्याघ्रापयंतीव पार्थो रूपाणि दृष्टवान् ॥ २१९ ॥
पुष्पगुच्छांश्च मुकुटे प्रत्यंगं विधृतानपि ।
कंठे धृताः पुष्पमालाः सुगंधाढ्या अलौकिकाः ॥ २२० ॥
स्वर्गोऽर्कतेजसा दीप्तो मेरुर्वा स्वर्णदीपितः ।
तद्वत्पीतांबरो यस्य नितंबोपरि राजते ॥ २२१ ॥
कर्पूरलिप्तः शंभुर्वा कैलासः पारदोंभितः ।
नानाक्षीरोदकैः किंवा क्षीराब्धिरिव तर्पितः ॥ २२२ ॥
चंद्रवस्त्रं संप्रसार्य प्रावृतं गगनं यथा ।
एवं चंदनलिप्तांगमपश्यद्रूपमर्जुनः ॥ २२३ ॥
कांतिवृद्धिः प्रकाशस्यानंदतापोऽपि नश्यति ।
यत्सुगंधेन गंधस्य मोहकत्वं च वर्धते ॥ २२४ ॥
लिंपति ब्रह्म यस्यांगमनंगोऽगं बिभर्ति च ।
तस्य गंधस्य माहात्म्यं को वा वर्णयितुं क्षमः ॥ २२५ ॥
विलोक्य यस्य शृंगारं पार्थश्चित्ते मुमोह च ।
तिष्ठंतमुपविष्टं वा निद्रितं वेद नैव सः ॥ २२६ ॥
अपश्यद्दृष्टिमुन्मील्याऽखिलं विश्वस्वरूपकम् ।
अक्ष्णोर्निमीलनेऽप्येवं विश्वरूपं व्यलोकयत् ॥ २२७ ॥
दृष्ट्वा मुखान्यनेकानि पृष्टं तत्राऽकरोत्क्रिया ।
तत्रापि हस्तचरणमुखान्यासंस्तथैव हि ॥ २२८ ॥
आश्चर्यं पश्यतो विश्वरूपाण्यालोचयत्परम् ।
अपश्यतोऽपि दृश्यंते तदाश्चर्यमनीदृशम् ॥ २२९ ॥
दर्शनं चाऽदर्शनं च सशरीरमलुंपत् ।
न पार्थस्य कृतिः सेयं किंतु तस्मिन्प्रभोः कृपा ॥ २३० ॥
मत्वाऽऽश्चर्यमहापूरे स यावन्नोत्थितस्ततः ।
तावत्पार्थोऽपतन्मोहान्महत्याश्चर्यसागरे ॥ २३१ ॥
दर्शनोत्कंठितायैवं दर्शयित्वा स्ववैभवम् ।

१ पारदेन उंभित =विलेपितः.

भगवान्विश्वरूपं तदव्याप्योच्च तदंतरे ॥ २३२ ॥
विश्वरूपं दर्शयेति प्रार्थितः सर्वतोमुखः ।
मुहुः पार्थेन तत्कालं विश्वरूप्यभवत्स्वयम् ॥ २३३ ॥
या दिव्यदृष्टिः पार्थाय दत्ता देवेन निस्तुला ।
तया सूर्यप्रकाशस्य दीपस्यापि न कारणम् ॥ २३४ ॥
निमीलितोन्मीलिता वा ध्वांतेऽप्यालोचनक्षमा ।
प्राहैवं धृतराष्ट्राय संजयो हस्तिनापुरे ॥ २३५ ॥
राजन् किं वर्णयाम्यत्र नानालंकारभूषितम् ।
विश्वतश्चक्षुषं पार्थो विश्वरूपं ददर्श ह ॥ २३६ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

विश्वरूपं कथमिति राजन्किं कथयामि ते ।
कल्पांते द्वादशादित्योदयतेजोधिकप्रभम् ॥ २३७ ॥
सहस्राधधयः सूर्या एकदैवोदिता यदि ।
तथापि न लभेयुस्ते तुलनां वैश्वतेजसः ॥ २३८ ॥
एकत्रिता विद्युतो वा जज्वाल प्रलयानलः ।
दशापि तेजसां तत्र प्रकारा मिलिता यदि ॥ २३९ ॥
तदाऽल्पांशेन तुलनां विश्वरूपस्य गच्छति ।
न याति पूर्णसादृश्यं तेजःस्तोमोऽपि सर्वथा ॥ २४० ॥
एवं यद्विश्वरूपस्य तेजः प्रकटितं तदा ।
तद्व्यासकृपया दृष्टं माहात्म्यं श्रीहरेर्मया ॥ २४१ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥ १३ ॥

विश्वरूपस्यैकदेशेऽखिला सृष्टिरदृश्यत ।
सागरस्य जले यद्वद्बुद्बुदाः स्पष्टमुत्थिताः ॥ २४२ ॥

---

१ विश्वरूपप्रकाशस्य.

गंधर्वनगरं व्योम्नि पैपीलकमृदुच्छ्रयः ।
किंवा धूलिकणानां च मेरावावरणं यथा ॥ २४३ ॥
तथेदं विश्वमखिलं शार्ङ्गिणोऽग्रे व्यराजत ।
तस्मिन्नवसरेऽपश्यद्देवदेवस्य पांडवः ॥ २४४ ॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥ १४ ॥**

विश्वस्मादस्मि भिन्नोऽहमित्यासीद्द्वैतकल्पनम् ।
पार्थस्य लुप्तं तत्सर्वमैक्यमालोकयत्तदा ॥ २४५ ॥
आनंदितोऽभून्मनसि गात्राण्यासन्श्लथानि च ।
आपादमस्तकं तस्य रोमांचाः सहसोत्थिताः ॥ २४६ ॥
मेघवृष्टौ पर्वतस्य निरस्ते मलसंचये ।
तृणांकुराः प्ररोहंति तथा रोमोद्गमोऽभवत् ॥ २४७ ॥
चंद्रस्य किरणस्पर्शे द्रवतींदुमणिर्यथा ।
तथा पार्थस्य सर्वांगेऽप्यस्फुरन्धर्मबिंदवः ॥ २४८ ॥
भृंगो रुद्धः पद्मकोशे तेन साकं चलत्यपि ।
तद्वदंतःसुखेनापि पार्थदेहो व्यकंपत ॥ २४९ ॥
कर्पूरकदलीस्तंभादुत्पद्यंते यथा कणाः ।
तथैव पार्थनेत्राभ्यामगलन्नश्रुबिंदवः ॥ २५० ॥
सुधाकरोदये यद्वदृतोऽब्धिरपि वर्धते ।
तथा मुहुः पार्थचित्ते समुद्भूताः सुखोर्मयः ॥ २५१ ॥
तथाष्टौ सात्त्विका भावाश्चाहंपूर्विकयोत्थिताः ।
तेनोद्भूतं पार्थचित्ते ब्रह्मानंदसुखं मुदा ॥ २५२ ॥
ब्रह्मानंदेऽपि च द्वैतं दर्शनार्थं सुरक्षितम् ।
ततः श्वासं समुत्सृज्य स्वस्थः कृष्णं व्यलोकयत् ॥ २५३ ॥
यत्र कृष्णमुखं तत्र मूर्धानमवनाम्य च ।
अर्जुनोऽजलिमाबध्य प्रार्थनामकरोत्तदा ॥ २५४ ॥

---

१ पिपीलिकासंचितो मृत्संचिः. २ इंदुमणिश्चंद्रकांतः.

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

प्रभो जय जय स्वामिन्ननुकंपा कृता मयि ।
यद्विश्वरूपं पश्येयं जीवः साधारणोऽप्यहम् ॥ २५५ ॥
महद्योपकृतं स्वामिंस्तेन तुष्टोऽस्मि सर्वथा ।
अस्याः सृष्टेस्त्वं कर्तासीत्येयं दृष्टं मयाऽधुना ॥ २५६ ॥
मंदराद्रौ यथा संति श्वापदानि ततस्ततः ।
एवं त्वदंगे दृश्यंते चंद्रेंद्रभुवनानि च ॥ २५७ ॥
देवाऽऽकाशेऽपि दृश्यंते सर्वे ग्रहगणा यथा ।
कोटराण्यंडजानां वा संति यद्वन्महाद्रुमे ॥ २५८ ॥
तथैव श्रीहरे स्वर्गो देवसंघसमावृतः ।
दृश्यते विश्वरूपेऽस्मिन्शरीरे परमाद्भुतः ॥ २५९ ॥
महाभूतानि पंचापि दृश्यंतेऽत्र समासतः ।
भूतग्रामान्भूतसृष्टेर्देहे पश्यामि ते विभो ॥ २६० ॥
सत्यलोकोऽस्ति ते देहे ब्रह्मदेवसमन्वितः ।
इतरत्रालोच्यमाने कैलासांगोऽप्यदृश्यत ॥ २६१ ॥
त्वच्छरीरस्यैकदेशे पार्वत्याऽस्ति समं शिवः ।
आश्चर्यं त्वच्छरीरेऽस्मिन्स्वतस्त्वमपि दृश्यसे ॥ २६२ ॥
कुलं च कश्यपादीनां स्वरूपे दृश्यतेऽखिलम् ।
भुजंगैः सह पातालं देहेऽस्मिन्दृश्यते तव ॥ २६३ ॥
किं बहूक्त्या विश्वपते त्वदंगान्येव भित्तयः ।
कृताश्चाकृतयस्तासु भुवनानां चतुर्दश ॥ २६४ ॥

---

१ अगः पर्वतः.

भुवनस्याश्च दृश्यंते लोकाश्चित्रेष्वनेकशः ।
एवं कृष्णास्ति त्वदीयमगाधत्वमलौकिकम् ॥ २६५ ॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥

दिव्यदृष्टिबलेनैव दृष्टं सर्वांगमद्य ते ।
तव बाहुद्वये दृष्टाः प्ररूढा गगनांकुराः ॥ २६६ ॥
तव देव कराः सर्वे सततं कार्यतत्पराः ।
कुर्वंतो व्यवहारांश्च जाता मद्दृष्टिगोचराः ॥ २६७ ॥
भांडाराणि यथा स्रष्टेर्माययोद्घाटितानि हि ।
तथा तवोदराण्यत्र दृश्यंते देव सर्वतः ॥ २६८ ॥
सहस्रशीर्ष्णोऽनंतानि मुखानि मम पश्यतः ।
भासंते ब्रह्मवृक्षाग्रे फलानीव मुखानि हि ॥ २६९ ॥
यथा मुखान्यनंतानि तथैव कमलापते ।
विश्वरूपे त्वदीयेऽस्मिन्दृश्यंते नेत्रपंक्तयः ॥ २७० ॥
किं बहूक्त्या स्वर्गभूमिपातालान्यखिला दिशः ।
दृश्यंते भेदरहिता विश्वरूपमया इव ॥ २७१ ॥
न दृश्यते त्वद्रहितमणुरेणुमितं स्थलम् ।
नावकाशोऽस्ति कुत्रापि सर्वं व्याप्तमिदं त्वया ॥ २७२ ॥
नानाऽपरिमितान्येवं भूतान्यासन् जगत्त्रये ।
सर्वाणि तानि व्याप्तानि श्रीहरे वर्म्मणि[1] त्वया ॥ २७३ ॥
एवं त्वं कुत आयातः कोपाविष्टोऽसि वा स्वयम् ।
का वोदरे त्वामवहत्क्रियास्थानं महत्तव ॥ २७४ ॥
कीदृग्वयः स्वरूपं वा परतश्च किमस्ति ते ।
किं वा त्वद्वाहनमिति द्रष्टुमैच्छमहं यदा ॥ २७५ ॥

---

१ वर्म शरीरम्.

तदा जातोऽसि सर्वेस्त्वं स्वाधिष्ठानं त्वमेव हि ।
तव नास्त्युद्भवस्थानं सिद्धोऽनादिरसि स्वतः ॥ २७६ ॥
न तिष्ठन्नोपविष्टस्त्वं नास्युच्चो वामनोऽपि न ।
अधश्चोर्ध्वं त्वमेवासि सदा वैकुंठनायक ॥ २७७ ॥
तव त्वत्सदृशं रूपं हरे त्वं त्वद्वृतं वयः ।
सर्वतः पृष्ठमुदरं भवतश्च भवानसि ॥ २७८ ॥
किंवाऽधिकं प्रवक्तव्यं तवानंत त्वमेव हि ।
निरंतरं पश्यतश्चाऽनुभवो ह्येयमेव मे ॥ २७९ ॥
सर्वेपूर्णेऽपि रूपेऽस्मिन्यन्न्यूनं दृश्यते मम ।
आदिमध्यांतकालास्तु न च श्रीकृष्ण संति ते ॥ २८० ॥
सर्वत्र मार्गितेऽप्येषां नैव शुद्धिरुपागता ।
अतस्त्वां वच्म्यसंदेहमादिमध्यांतवर्जितम् ॥ २८१ ॥
आदिमध्यांतरहित जगदीशाऽसित प्रभो ।
एवंप्रकारं ते विश्वरूपं दृष्टं मयाऽधुना ॥ २८२ ॥
भवतोऽस्मिन्विश्वरूपे पृथग्विविधमूर्तयः ।
किंतु तान्येव वासांसि वेष्टितानि ह्यनेकशः ॥ २८३ ॥
किंवोरुधा विश्वरूपाऽगे[१] वृक्षा बह्वयोऽपि मूर्तयः ।
पुष्पैः फलैश्चालंकारान्विदधत्योऽपि नैकशः ॥ २८४ ॥
श्रीकृष्ण त्वं सागरोऽसि तरंगास्तव मूर्तयः ।
किंवा त्वमेको वृक्षोऽसि मूर्तयस्तत्फलानि ते ॥ २८५ ॥
वस्तुमात्रे भृता भूमिर्व्योम्नि नक्षत्रविस्तरः ।
तद्वन्मूर्तिमयं तेऽद्य रूपं पश्यामि सर्वतः ॥ २८६ ॥
तत्र च प्रतिमूर्त्यंगे त्रिलोक्युत्पद्य नश्यति ।
त्वद्देहे मूर्तयश्चैवं दृश्यंते रोमरोमसु ॥ २८७ ॥
एवं विश्वप्रसारस्य कर्ता त्वं कोऽसि कस्य वा ।
परं विचारे त्वं भासि पांडवानां तु सारथिः ॥ २८८ ॥

---

त्वद्वृतं=त्वत्संबंधि. १ अगे पर्वते.

मुकुंद भाति मामेवं व्यापकस्त्वं निरंतरम् ।
सगुणं रूपमास्थाय भक्तांस्त्रससि संकटात् ॥ २८९ ॥
दृष्ट्वा चतुर्भुजां मूर्तिं तुष्यंत्यस्मिन्मनांसि च ।
सौभाग्यामपि हस्ताभ्यां भवत्यालिंगितुं क्षमा ॥ २९० ॥
स्वभक्तेषु कृपां कर्तुं धत्से सगुणरूपकम् ।
तदाऽस्माकं व्यापकोऽपि सामान्य इव दृश्यसे ॥ २९१ ॥
अथ दृष्टिभ्रमो यातो दिव्यदृष्टिः कृतोऽस्म्यहम् ।
अतोऽभवत्त्वन्महिमा सहजं दृष्टिगोचरः ॥ २९२ ॥
मकरास्यधुरः पश्चाद्यासीस्त्वं यो रथे मम ।
स एव ब्रह्मांडरूपोऽसीति ज्ञातं मयाऽधुना ॥ २९३ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमंतम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समंता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

यो धृतो मुकुटः पूर्वं स एवास्ति हरेऽधुना ।
परं तेजोविशेषोऽस्य जातश्चित्रं विभाति मे ॥ २९४ ॥
चक्रमासीद्दूर्ध्वहस्ते तदेवेदं रमापते ।
तदेव विश्वरूपेऽस्मिन्भ्रामयन्यतिवेगतः ॥ २९५ ॥
गदापि सैवास्त्यकरे निःशस्त्रौ चाप्यधःकरौ ।
अश्वरश्मिप्रतोदाढ्यौ भातः पूर्ववदेव माम् ॥ २९६ ॥
विश्वरूपालोचनोत्थं ज्ञात्वा मम मनोरथम् ।
धृतं पूरयितुं विश्वरूपं वेद्मि त्वयाऽधुना ॥ २९७ ॥
तस्यापि कौतुकं ज्ञातुमस्ति मां नैव योग्यता ।
अतोऽनंत ममाश्चर्यमाधिक्यं भासते मुहुः ॥ २९८ ॥
विश्वरूपं चास्ति नास्तीत्यपि वक्तुं न शक्यते ।
व्याप्तास्ति सर्वतोऽप्यंगकांतिर्जगति सोज्ज्वला ॥ २९९ ॥

१ ख-चतुर्भुजा मूर्तिः.

यत्राऽग्नितेजोऽपि ध्वस्तमिंद्रगोपायितो रविः ।
एवं विलक्षणं तेजो विश्वरूपे धृतं त्वया ॥ ३०० ॥
महातेजःसागरेऽस्मिन्सृष्टिराभाति मज्जिता ।
कल्पांतविद्युद्भिरिवाच्छादितं गगनं यथा ॥ ३०१ ॥
छित्वा ज्वालास्तु कल्पाग्नेर्गगने मंडपः कृतः ।
भवदीयं तथा तेजो दृग्भ्यां द्रष्टुं न शक्यते ॥ ३०२ ॥
तव दृष्टोज्वलं तेजः शरीरं दहतीव मे ।
पश्यतो विश्वरूपं च दिव्या दृष्टिर्लसत्यपि ॥ ३०३ ॥
कालाग्निरुद्रे यो गूढो महाप्रलयहव्यवाट् ।
तस्य तृतीयनेत्रस्य कलिकाऽद्य विकासिता ॥ ३०४ ॥
विश्वरूपप्रकाशेन पंचाग्न्यर्चिर्भिरेव च ।
अद्य ब्रह्मकटाहस्य शकलानि भवंति हि ॥ ३०५ ॥
एवमत्यद्भुतं रूपं दृष्टं नैवेह जन्मनि ।
व्यासेरंतो न कांतेश्च भगवन्भिद्यते तव ॥ ३०६ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

त्वमक्षरोऽसि श्रीकृष्ण तथैव प्रणवात्परः ।
श्रुतयो मृगयंति त्वां त्वत्स्थानं नाप्नुवंति ताः ॥ ३०७ ॥
आकारमूलस्थानं त्वं निधानं संग्रहस्य च ।
अव्ययश्चाऽविनाशी च गहनोऽसि च सर्वतः ॥ ३०८ ॥
धर्मस्य जीवनमसि सिद्धोऽनादिश्च नूतनः ।
षट्त्रिंशत्तत्त्वभिन्नश्च सप्तत्रिंशोऽसि पूरुषः ॥ ३०९ ॥

अनादिमध्यांतमनंतवीर्य-
मनंतबाहुं शशिसूर्यनेत्रम् । ..

पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपंतम् ॥ १९ ॥

आदिमध्यांतरहितोऽनंतोऽसि स्वीयशक्तितः ।
विश्वस्याऽगणिता हस्तास्त्वमेव चरणा अपि ॥ ३१० ॥
भयनेत्रे चंद्रसूर्यौ रुद्ररूपे दर्शयिष्यतः ।
शासनं कोपदृष्ट्या ते कृपादृष्ट्या च पालनम् ॥ ३११ ॥
एवंविधोऽत्र देवेश सत्यं मां दृश्यसे प्रभो ।
आननं दृश्यते तद्वत्प्रज्वलत्प्रलयाग्निवत् ॥ ३१२ ॥
दावानलप्रदीप्तेऽद्रौ ज्वालाः स्युस्तत्र नैकशः ।
दंष्ट्रा लिहति जिह्वापि त्वदीया दृश्यते मम ॥ ३१३ ॥
भगवंस्त्वन्मुखस्थौष्ण्यं तेजः सर्वांगसंभवम् ।
यत्तापयति तेनाद्य विश्वस्य प्रलयो भवेत् ॥ ३१४ ॥

द्यावापृथिव्योरिदमंतरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

तथा स्वर्गश्च पातालं पृथिवी चांतरालकम् ।
किंवा दशदिशः सर्वा दिक्चक्रं च समाकुलम् ॥ ३१५ ॥
व्याप्तमेकेन रूपेण दृष्ट्वाऽऽसं चकितो भयात् ।
बिभाति चोग्ररूपेऽस्मिन्साकाशं ब्रुडतीव च ॥ ३१६ ॥
रूपप्रवाहे मज्जंति भुवनानि चतुर्दश ।
एवं तवाद्भुतं रूपं द्रष्टुं शक्नोम्यहं कथम् ॥ ३१७ ॥
न ज्ञायते तव व्याप्तिरुग्रं तेजो न सह्यते ।
सुखं दूरेऽस्ति जगतः कृच्छ्रात्प्राणंति देहिनः ॥ ३१८ ॥
दृष्ट्वाद्भुतमिदं रूपं भीतेरद्य भरोऽजनि ।
अद्य देव त्रिभुवनं दुःखसिंधौ निमज्जति ॥ ३१९ ॥

महतां दर्शने किंवा भयदुःखोद्भवो भवेत् ।
परं न मे समाधानं विश्वरूपेण जायते ॥ ३२० ॥
यावद्दृष्टं न ते रूपं तावत्सा संसृतिः शुभा ।
त्वद्दर्शनेऽशुभा भाति त्रस्तं च विषयेषु हृत् ॥ ३२१ ॥
देव त्वद्दर्शनं जातं दयामालिंगनं कथम् ।
न दृष्टं चेच्छोकमग्नः कथं तिष्ठाम्यनुक्षणम् ॥ ३२२ ॥
पश्चाद्गतौ तु संसारोऽनिवारः पीडयिष्यति ।
पुरो गतौ विश्वरूपं द्रष्टुं शक्नोमि नैव ते ॥ ३२३ ॥
द्विधाऽत्र संकटे प्राप्ते त्रिलोकी शुष्यति स्वयम् ।
प्रसंगो भगवन्नेवं दृश्यते मत्पुरः स्थितः ॥ ३२४ ॥
यथाऽग्निलुपितो मर्त्यः शांत्यै सिंधुं प्रधावति ।
बिभेति चाधिकं तत्र प्रचंडलहरीक्षणात् ॥ ३२५ ॥
दशैवं जगतः प्राप्ता त्वां दृष्ट्वाऽतिभयंकरम् ।
इतः परं ज्ञानिनां च संघाः सर्वे वसंति हि ॥ ३२६ ॥

अमी हि त्वां सुरसंघा विशंति
केचिद्भीताः प्रांजलयो गृणंति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवंति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

त्वदंगतेजसा कर्मबीजानि प्रज्वलंति हि ।
ये सद्भावेन सहजं त्वद्रूपे संति मीलिताः ॥ ३२७ ॥
दर्शनात्सांप्रतं केचिदत्यंतं ये भयार्दिताः ।
ते नमंत्यंजलिं बध्वा प्रार्थयंति, स्तुवंति च ॥ ३२८ ॥
अज्ञानाब्धौ वयं मग्ना गुंफिता विषयोदके ।
स्वर्गे संसारसौख्ये च द्विधा मोहेन गुंठिताः ॥ ३२९ ॥
देवाऽस्मान्मोचयेत्को वा त्वां विना भवसागरात् ।
अतस्त्वां जीवभावेन दयालो शरणागताः ॥ ३३० ॥

तथा महर्षयः सिद्धा विद्याध्रा देवगायनाः ।
स्वस्तिवादेन भवतः कुर्वंति स्तवनं मुदा ॥ ३३१ ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गंधर्वयक्षासुरसिद्धसंघा
वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

इमे रुद्रा[1] द्वादशार्काः साध्याश्च वसवः सुराः ।
अश्विनौ वायवश्चैव विभवाख्या मरुद्गणाः ॥ ३३२ ॥
पितरश्चैव गंधर्वा यक्षा रक्षोगणा अपि ।
इंद्राद्याः प्रमुखा देवास्तथा सिद्धादयोऽपि च ॥ ३३३ ॥
स्वस्वलोकादिमे सर्वे विश्वरूपदिदृक्षवः ।
आगताः संति तान्सर्वान्भगवन्नवलोकय ॥ ३३४ ॥
प्रतिक्षणं च पश्यंतो मनस्यत्यंतविस्मिताः ।
भावेन त्वच्चरणयोर्मूर्धानं नमयंति भोः ॥ ३३५ ॥
उच्चैर्जयजयारावात्स्वर्गमुद्घोषयंति च ।
ललाटेंऽजलिमाबध्य नमनार्थं स्थितास्तव ॥ ३३६ ॥
त्वद्विनीतवृक्षवने वसंतः[2] प्रेमभक्तितः ।
यद्धस्तैः पल्लवितान्फलरूपेण लभ्यसे ॥ ३३७ ॥

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

भगवन्विश्वरूपं ते जनानां पश्यतां तव ।
भाग्योदयो दृशोर्जातश्चित्ते सौख्योदयोऽभवत् ॥ ३३८ ॥

१ एकादश रुद्राः. २ वसवोऽर्थः.

त्रैलोक्यव्यापकं रूपं दृष्ट्वा विभ्यति निर्जराः ।
मुखेऽपवर्तितें क्वापि दृश्यते संमुखं हि तत् ॥ ३३९ ॥
विकराले स्वरूपेऽस्मिन्मुखनेत्राण्यनेकशः ।
सशस्त्राश्चानंतहस्ताः संति, रूपे तथैकले ॥ ३४० ॥
अनंता बाहवः पादा वर्णाश्चाप्युदराणि च ।
दृश्यते मुखमेकैकं सावेशं च भयंकरम् ॥ ३४१ ॥
यथा कल्पांतसमये क्षुब्धो भूत्वा यमः स्वयम् ।
ज्वालाभिर्दीपयस्यग्निर्विदीप्ताभिर्दिशो दश ॥ ३४२ ॥
शंभोः संहारयंत्राणि क्षेत्राणि भैरवस्य वा ।
संहारदेवीपात्राणि प्रलयार्थोद्यतानि हि ॥ ३४३ ॥
तथैवेतस्ततो विष्वक्संदृश्यंते मुखानि ते ।
दर्याममांतः सिंहस्य दंष्ट्रा भांति विनिःसृताः ॥ ३४४ ॥
कालरात्रेरंधकारे भूतानीव भ्रमंति हि ।
तथा प्रलयरक्ताभा दंष्ट्राः संति भयंकराः ॥ ३४५ ॥
कालेन युद्धमाहूतं प्रलये मरणं यथा ।
भयंकरं च भवतो वदने दृश्यतेऽखिलम् ॥ ३४६ ॥
दीनेयेयं लोकसृष्टिः क्षणमालोचिता यदि ।
भासते दुःखकालिंद्यास्तटे द्रुरिव निश्चला ॥ ३४७ ॥
नौस्त्रिलोकीजीवितस्य पतिता मृत्युसागरे ।
शोकयातेरिता देव भ्रमत्यावर्तगा यथा ॥ ३४८ ॥
यदि क्रोधेन मां ब्रूषे 'लोकदुःखेन किं तव ।
दृष्टस्य विश्वरूपस्य त्वं सुखं ध्यानमाचर' ॥ ३४९ ॥

एवं ब्रवीषि यदि देव तथापि सत्यं
संप्रार्थयामि नहि केवललोकभीत्या ।
भीतोऽहमेव तव रूपविलोकनेन
प्राणा व्रजंति भयकंपयुता मदीयाः ॥ ३५० ॥
मां कंपते प्रलयरुद्रसमोऽपि देवो
मृत्युर्निलीन इव तिष्ठति मद्भयेन ।

भीतोऽहमद्य भवदीयकरालरूपं
दृष्ट्वा, दशैवमधुना विहिता त्वया मे ॥ ३५१ ॥
अस्यैव नाम वपुषो यदि विश्वरूपं
भीतेर्भयप्रदमिदं नु कथं विभाति ।
लोकक्षयार्थमुदितेव विषूचिकेयं
मां दृश्यतेऽतिभयदा भवतो विभूतिः ॥ ३५२ ॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा
धृतिं न विंदामि शमं च विष्णो ॥ २४ ॥

कति क्रुद्धान्याननानि महाकालं जयंति हि ।
यैः सर्ववैपुल्यतो व्योम्नः प्रापितं चास्ति लाघवम् ॥ ३५३ ॥
नैवाघूर्णयंति नियता त्रिलोक्याऽऽकलयंति च ।
येषां प्रज्वलिता ज्वालाः धुन्वंत्यग्निमपि द्रुतम् ॥ ३५४ ॥
नह्येकसदृशं चान्यद्भिन्नवर्णानि नैकशः ।
प्रलये साह्यमेतेषां गृह्णात्यग्निर्जगत्क्षये ॥ ३५५ ॥
त्रैलोक्यभस्मकृद्येषामंगतेजो विदीप्यते ।
तेषां मुखेषु दृश्यंते दंता दंष्ट्रा यथायथम् ॥ ३५६ ॥
जातो वायोर्धनुर्वातः पूरेऽब्धिर्भूद्धितः स्वयम् ।
वडवाग्निं मारयितुं विषाग्निर्वाऽयमुत्थितः ॥ ३५७ ॥
अश्नात्यग्निः कालकूटं मरणं याति वा मृतिम् ।
संहारतेजोवदनं दृश्यते भीतिदं तथा ॥ ३५८ ॥
महांति पश्याननानि ह्यंतरालं त्रुटत्यपि ।
यथाऽऽकाशं निमित्तैव गच्छेद्दूर्ध्वं कश्चिन्महत् ॥ ३५९ ॥
किंवा कक्षीकृत्य भुवं हिरण्याक्षोऽतलं गतः ।
पातालस्थभैरवेण द्वारमुद्घाटितं तदा ॥ ३६० ॥

विकासितेष्वाननेषु जीह्वा लोलंत्यभीक्ष्णशः ।
विश्वमेकग्रासमितं न स्यादिति ग्रसंति न ॥ ३६१ ॥
पातालव्यालफूत्कारैर्ज्वालाभिर्ग्रसतेंऽबरम् ।
प्रसृतास्याननगुहास्वपि जिह्वा विभांति हि ॥ ३६२ ॥
प्रलये विद्युदैक्येन यथा शृंगारितं वियत् ।
तद्वदोष्ठाद्बहिर्यांति दंष्ट्राणां कीलकास्तव ॥ ३६३ ॥
ललाटे गूढनेत्राणि जनयंति मिथो भयम् ।
मृत्युप्रघाते ध्यांताढ्ये संति गुप्तस्थलेषु च ॥ ३६४ ॥
एवं भयं वर्धयित्वा त्वं कमर्दितुमिच्छसि ।
तथापि मां समुत्पन्नं तेन मृत्युकरं भयम् ॥ ३६५ ॥
विश्वरूपदिदृक्षायाः प्राप्तं प्रतिफलं मया ।
दृष्ट्वा विश्वस्वरूपं त्वां साफल्यं चक्षुषोरभूत् ॥ ३६६ ॥
नश्वरः पार्थिवो देहः प्राप्ते काले स गच्छति ।
आस्तां तत्रापि चैतन्यमित्येवं भावयेऽधुना ॥ ३६७ ॥
शरीरं कंपते भीत्या मनः संतप्यति क्षणम् ।
अभिमानः स्वयं लुप्तो बुद्धिरासीद्भयार्दिता ॥ ३६८ ॥
यः सर्वेभ्यः पृथग्भूतः केवलानंदमूर्तिमान् ।
एतादृशस्यात्मनोऽपि कंपः प्रादुर्बभूवह ॥ ३६९ ॥
कथं भिदं दर्शनं ते बोधो देशांतरे गतः ।
इतःपरं कथं तिष्ठेत्संबंधो गुरुशिष्ययोः ॥ ३७० ॥
देव त्वद्दर्शने जाते मानसं जातमाकुलम् ।
तदावरीतुं धैर्येण प्रयत्नं करवाण्यहम् ॥ ३७१ ॥
पूर्वं मे गलितं धैर्यं ततोऽभूद्रूपदर्शनम् ।
उपदेशमिषेणात्र संभ्रमे पातितोऽस्म्यहम् ॥ ३७२ ॥
मम जीवो विश्रमार्थं धावतीतस्ततः प्रभो ।
नाश्रयं लभते कापि स्वात्मनोऽनुभवात्मकम् ॥ ३७३ ॥
सृष्टिजीवहरी जाता विश्वरूपविषूचिका ।
यदीदानीं नार्थयेयं जीवनं स्याचदा कथम् ॥ ३७४ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

स्फुटितं मद्दृशोरग्रे यद्ब्रह्माण्डं भयात्मकम् ।
तद्वत्क्रूराण्याननानि दृश्यंते प्रसृतानि माम् ॥ ३७५ ॥
दंतानां दंष्ट्रयोरोष्ठौ प्रावरीतुं नहि क्षमौ ।
तथा प्रलयशस्त्राणां दृश्यते कंटकाकृतिः ॥ ३७६ ॥
तक्षकाय भृतं क्ष्वेडं भूतानां कालरात्र्यपि ।
आग्नेयास्त्रं तेजितं वा संहारप्रलयाग्निना ॥ ३७७ ॥
तथा मुखानि ते संति येभ्यश्चावेशसंभयः ।
आयाताश्चासदुपरि पूरा मृत्युजलस्य च ॥ ३७८ ॥
कल्पांतचंडानलायाऽमिलज्झंझानिलः पुनः ।
एवं चोभयसंयोगे कस्य भस्म न जायते ॥ ३७९ ॥
ते भीतिदान्याननानि दृष्ट्वा धैर्यं गतं मम ।
दिशोऽपि विस्मृताः सर्वा जाता स्वस्यापि विस्मृतिः ॥३८०॥
क्षणं दृष्टं विश्वरूपं तेन सौख्यं लयं गतम् ।
विकरालमिदं रूपं श्रीहरे कृपयाऽऽवृणु ॥ ३८१ ॥
करोष्येवमिति ज्ञाने प्रश्नं नाऽकरवं तदा ।
येनकेनाप्युपायेन रक्ष मां प्रलयानलात् ॥ ३८२ ॥
हरेऽस्माकं भवान्स्वामी रूपमावृणु दुःसदम् ।
महामारीप्रसारं त्वमपसारय दूरतः ॥ ३८३ ॥
देवानामपि देवोऽसि सर्वविश्वाश्रयोऽपि च ।
विस्मृत्य रक्षणं किंतु संहारयसि सर्वतः ॥ ३८४ ॥
प्रसन्नो भव देवेश स्वीयां मायां निवारय ।
साध्वसं दूरतः कृत्वा तत्रासान्मोचयस्व माम् ॥ ३८५ ॥
मुहुरेतावदंतं त्वां नम्रः सन्प्रार्थयामि च ।

दर्शनाद्विश्वरूपस्य भयग्रस्तोऽसि सर्वथा ॥ ३८६ ॥
संकटं त्वमरावत्या मयैकेनापहारितम् ।
यद्वा कालमुखे गंतुं न भीतोऽसि कदाचन ॥ ३८७ ॥
तथा नैतद्विश्वरूपं मृत्योरपि भयंकरम् ।
ग्रस्तुं विश्वं सहासाभिर्धृतं रूपं प्रभो त्वया ॥ ३८८ ॥
नाथ प्रलयवेलास्ति त्राता जातोऽसि कालवत् ।
तेन त्रैलोक्यगोलोऽयमल्पायुरभवत्प्रभो ॥ ३८९ ॥
पश्येदं दैवदौर्भाग्यं शांतीच्छो विघ्नमागतम् ।
बुडितं वा स्वयं विश्वं त्वया वा ग्रस्यतेऽखिलम् ॥ ३९० ॥
विवृत्यानंताननानि सर्वा सेनामितस्ततः ।
त्वमेवात्सीति वेगेन प्रत्यक्षं दृश्यते हरे ॥ ३९१ ॥

अमी हि त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहाऽस्मदीयैरपि योधमुख्यैः ॥ २६ ॥

कुरुवंशोद्भवा वीरा धृतराष्ट्रकुमारकाः ।
सर्वे सपरिवाराश्च पतंति भवतो मुखे ॥ ३९२ ॥
तथा ये देशदेशेभ्यो नृपा योद्धुमुपस्थिताः ।
तेषां वृत्तं कथयितुं नावशिष्टोऽस्ति कश्चन ॥ ३९३ ॥
युद्धसाहित्यसहितान्मदोन्मत्तगजानपि ।
विस्तीर्णेन मुखेनाद्य खादस्यविरतं हरे ॥ ३९४ ॥
वर्षतोऽपि च नाराचानावेशेन पदातयः ।
प्रविश्य त्वन्मुखं सर्वे विनश्यंति महाज्ञवात् ॥ ३९५ ॥
यदेकमपि संहर्तुं समर्थं जगदायुधम् ।
ग्रसस्येवं कोटिशस्त्वमायुधानि मुखेन च ॥ ३९६ ॥
सेनां समुदितामत्र युद्धार्थं चतुरंगिणीम् ।
विना दंतैर्भक्षयित्वा देव किं परितुष्यसि ॥ ३९७ ॥

सत्यशौर्यनिधिर्भीष्मः श्रीहरे भक्षितस्त्वया ।
तथा वीराग्रणीर्द्रोणो भक्षितो ब्राह्मणः कथम् ॥ ३९८ ॥
देवायं सूर्यतनयः कर्णवीरोऽपि भक्षितः ।
तेन चिंता गताऽस्माकं सर्वेषामपि दूरतः ॥ ३९९ ॥
देव हाऽनुग्रहस्येयं दुर्दशोपनता कथम् ।
प्रार्थ्याऽऽनीतं मयैवेदं जनानां मरणं ध्रुवम् ॥ ४०० ॥
यत्स्वल्पाधिकभुक्ताभिस्तृप्तिर्नासीद्विभूतिभिः ।
असमाहितभावेन पृष्टो देवः पुनर्मया ॥ ४०१ ॥
भवितव्यं भवत्येव बुद्धिस्तदनुसारिणी ।
अगस्त्याऽयशो भालगतं नश्येत्कथं नु मे ॥ ४०२ ॥
क्षीराब्धेरमृतं लब्धं तेनाऽमृतैः सुरासुरैः ।
पुनर्यत्ने कृते कालकूटं लब्धं मृतिप्रदम् ॥ ४०३ ॥
अपकारोऽपि स लघुरासीदिति विभाव्यते ।
संकटं यत्तदा प्राप्तं तच्छिवेन निवारितम् ॥ ४०४ ॥
शमयेत्को ज्वलद्वातं कः पिबेत्सविषं वियत् ।
महाकालेन वा साकं क्रीडितुं कः क्षमो भवेत् ॥ ४०५ ॥
एवं पार्थो दुःखमग्नो हृदि शोकं चकार ह ।
परं प्रसंगे देवस्य स नोद्देशमबुबुधत् ॥ ४०६ ॥
हंताऽहं कौरवा घात्या इत्येवं यो भ्रमोऽजनि ।
तन्नाशार्थमनंतेन विश्वरूपं प्रदर्शितम् ॥ ४०७ ॥
न मारयति कं कोऽपि सर्वसंहारकोऽस्म्यहम् ।
व्यक्तीकर्तुमिदं तत्त्वं रूपं प्राचीकटद्धरिः ॥ ४०८ ॥
तद्ज्ञात्वैव पार्थाय व्यग्रतात्यंतमाविशत् ।
असंतमपि यः कंपमर्जुनोऽतरवर्धयत् ॥ ४०९ ॥

वक्त्राणि ते त्वरमाणा विशंति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनांतरेषु
संदृश्यंते चूर्णितैरुत्तमांगैः ॥ २७ ॥

पार्थोऽब्रवीदेकदैव सासिवर्माभयोर्दलम् ।
तवानने लयं याति यथाऽभ्राणि विशंति खे ॥ ४१० ॥
किं वा कल्पांतसमये सृष्टिमत्ति यथा यमः ।
स चैकविंशतिस्वर्गान्सपातालान्समग्रसत् ॥ ४११ ॥
प्रतिकूले यथा दैवे सकलं श्रीमतां धनम् ।
अकस्माद्विलयं याति यत्र कुत्रापि संस्थितम् ॥ ४१२ ॥
एवं कर्मगतिं पश्य सैन्यान्येकत्रितान्यथ ।
प्रविशंति मुखे तानि नह्येकमपि मुच्यते ॥ ४१३ ॥
लक्ष्यः शाखा ह्यशोकस्य नाशं यांत्युद्रचर्विताः ।
तथा जनानां मरणं संप्राप्तं भवदानने ॥ ४१४ ॥
शिरांसि सकिरीटानि दंष्ट्रासंधिगतान्यलम् ।
सहसा पिष्टतां यांति दृश्यंते सकलान्यपि ॥ ४१५ ॥
मुकुटस्थानि रत्नानि दंतेषु विकसंति च ।
रसनाग्रे रत्नकणाः संति दंष्ट्राप्रयोजिताः ॥ ४१६ ॥
विश्वस्वरूपकालेन लोकदेहाश्च भक्षिताः ।
रक्षितो लिंगदेहो मे जगत्पालेन केवलम् ॥ ४१७ ॥
तथाऽखिलेष्विन्द्रियेषूत्तमांगं यच्छिरोमिधम् ।
तत्त्वया रक्षितं देव महाकालमुखेऽपि हि ॥ ४१८ ॥
विस्मयेन पुनश्चोचे यत्सर्वं वदनह्रदे ।
पतंति तेषामपरा गतिः किं नास्ति सर्वथा ॥ ४१९ ॥
स्वयमेवाखिला सृष्टिर्याति मृत्युमुखेऽधुना ।
यत्र क्वापि स्थितान्स्वस्थः कालो ग्रसति सर्वतः ॥ ४२० ॥
ब्रह्माद्याश्च महांतोऽपि यांति चोर्ध्वमुखेऽखिलाः ।
सामान्यास्त्वानने ऽन्यस्मिंस्तदधस्थे विशंति हि ॥ ४२१ ॥
इतरे प्राणिनः क्षुद्रा ग्रासिता क्षुद्रवस्थले ।
एवं विश्वमुखात्कोऽपि विमुक्तः प्राणिनो न हि ॥ ४२२ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाऽभिमुखा द्रवंति ।

तथा तवामी नरलोकवीरा
विशंति वक्राण्यभिविज्वलंति ॥ २८ ॥
महानदीनां प्रवाहा यद्वद्गच्छंति सागरम् ।
सर्वतोऽस्मिन्मुखे तद्वत्प्रविशत्यखिलं जगत् ॥ ४२३ ॥
आयुष्यमार्गमाश्रित्य कृत्वाहोरात्रपद्धतिम् ।
सर्वे धावंति वेगेन तवास्मिन्पतितुं मुखे ॥ ४२४ ॥
यथा प्रदीप्तं ज्वलनं पतंगा
विशंति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशंति लोका-
स्तवापि वक्राणि समृद्धवेगाः ॥ २९ ॥
यथा पतंगाः स्वयांति ज्वलिते गिरिकंदरे ।
तथैवात्राऽखिला लोका विशंति भवतो मुखे ॥ ४२५ ॥
तथापि ये गता वक्रे तप्तलोहे जलं यथा ।
नष्टास्ते सर्वथैवात्र प्रयाता नामशेषताम् ॥ ४२६ ॥
लेलिह्यसे ग्रसमानः समंतात्
लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपंति विष्णो ॥ ३० ॥
अखिलान्भक्षयित्वैवं न जातं क्षुन्निवारणम् ।
कथं भवज्जाठराग्निरत्यंतं समदीदिपत् ॥ ४२७ ॥
यथा रुग्णो ज्वरान्मुक्तो दुष्काले वा दरिद्रवान् ।
तथा जिह्वा लिहंत्यत्राप्योष्ठप्रांतौ निरंतरम् ॥ ४२८ ॥
मुखेनाहारपर्याप्तमपि नोधरितं कचित् ।
कथं ह्यभूतपूर्वेयं क्षुधायास्तव तीव्रता ॥ ४२९ ॥
सागरश्चुलुकीकार्या भक्ष्या वाऽखिलपर्वताः ।
दंष्ट्राभ्यां पेषणीयो वा ब्रह्मगोलोऽखिलोऽपि च ॥ ४३० ॥

भक्षणीयाः किमु दिशश्चर्वणीयाश्च तारकाः ।
सर्वथाप्यतिरेकस्ते हरे कथमुपस्थितः ॥ ४३१ ॥
विषयैर्वर्धते कामः काष्ठैरग्निर्विवर्धते ।
तथा मुखान्यप्यखिलं भक्षयंत्यपि नातृपन् ॥ ४३२ ॥
वाडवाग्नौ प्रज्वलिते कपित्थं भस्मसाद्भवेत् ।
तथायोद्धाटिते वक्त्रे त्रैलोक्यं याति भक्ष्यताम् ॥ ४३३ ॥
मुखानि संति यावंति त्रैलोक्यानि क तत्कृते ।
एवं चाहारहीनानि निर्मितानि कुतस्त्वया ॥ ४३४ ॥
अहो जगदिदं सर्वं मुखज्वालासु भर्जितम् ।
दावाग्नौ सर्वतो दीप्ते पतंति हरिणा यथा ॥ ४३५ ॥
तद्वद्विश्वस्य दुष्कर्म प्रोद्भूतं नायमीश्वरः ।
प्रसारितं कालजालं सृष्टिमत्स्यादनाय किम् ॥ ४३६ ॥
अस्मात्तेजोमयाज्जालाद्बहिः सृष्टिः कथं व्रजेत् ।
किंवा मुखानि नेमानि किंतु लाक्षागृहाणि हि ॥ ४३७ ॥
स्वार्चिर्भिः प्लुष्यति कथं तन्न वेत्ति हुताशनः ।
परं स्पृशति यं कापि मरणं तस्य निश्चितम् ॥ ४३८ ॥
शस्त्रं न वेत्ति मरणं स्वस्मादन्यस्य जायते ।
किंवा विषं न जानाति प्राणा यांति स्वसेवनात् ॥ ४३९ ॥
स्वस्यात्युग्रत्वस्य तथा स्मरणं न तवास्ति किम् ।
यदेकस्मिन्नपि मुखेऽप्यखिलं लुप्यते जगत् ॥ ४४० ॥
भवानात्मास्ति सर्वेषां विश्वव्यापक एव च ।
तथाप्यखिलविश्वस्याधुनास्यंतकवत्कथम् ॥ ४४१ ॥
त्यक्ता मया जीविताशा श्रीकृष्णातिभयेन हि ।
संकोचमखिलं त्यक्त्वा ब्रूहि यत्ते मनोगतम् ॥ ४४२ ॥
कियद्रूपं वर्धयसि स्मर देवत्वमात्मनः ।
यदि चेन्न हरे शक्यं मामुज्जीवय केवलम् ॥ ४४३ ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।

विज्ञातुमिच्छामि भवंतमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥
तर्हीदानीं वेदवेद्य त्रैलोक्याद्य जगद्गुरो ।
विश्ववंद्यैकदा मेऽद्य शृणु विज्ञापनं प्रभो ॥ ४४४ ॥
तदाऽर्जुनेनैवमुक्त्वा कृष्णांघ्र्योः स्थापितं शिरः ।
विश्वेश्वर प्रार्थनां मे श्रूयतां कृपयाधुना ॥ ४४५ ॥
रूपं मे दर्शयेत्युक्तं स्वसमाधानहेतुना ।
तत्त्वयेदं प्रकटितं त्रैलोक्यं ग्रसितुं क्षमम् ॥ ४४६ ॥
कथयाद्य भवान्कोसि क्रूरं रूपं कुतो धृतम् ।
शस्त्रास्त्राणि च हस्तेषु धृतान्यत्र कुतस्त्वया ॥ ४४७ ॥
मुहुर्मुहुः क्रोधवशादुग्रो भवसि रुद्रादपि ।
भयंकराणि नेत्राणि कृत्वा भीषयसे कुतः ॥ ४४८ ॥
दृष्ट्वा तवाद्भुतं रूपं कालादपि भयंकरम् ।
ब्रूहि त्वमेकदा देव हेतुं वास्तवमात्मनः ॥ ४४९ ॥
ततः कृष्णोऽब्रवीत्पार्थ त्वं मां कोऽसीति पृच्छसि ।
तथोग्ररूपस्वीकारे पृच्छस्यपि च कारणम् ॥ ४५० ॥
श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां नभविष्यंति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

पार्थ जानीहि कालं मां लोकसंहारकारणात् ।
विवृतानि मुखान्यत्र विश्वं ग्रस्तुं मयाऽखिलम् ॥ ४५१ ॥
पुनः पार्थोऽब्रवीदेवं विनयात्प्रार्थितं मया ।
लोकसंकटनाशाय तेन क्षुब्धोऽधिकं प्रभुः ॥ ४५२ ॥
अस्तु, मे क्रुद्धवचनं श्रुत्वा खिन्नोऽर्जुनो भवेत् ।
इति देवोऽवदत्पार्थमपवादोऽपरोऽस्ति हि ॥ ४५३ ॥

स चायमस्मिन्संहारे जीवेयुः सर्वेपांडवाः ।
इति श्रुत्वार्जुनस्यापि प्राणाश्चैतन्यमागताः ॥ ४५४ ॥
स च मृत्युमुखं यातः सावधानोऽभवत्पुनः ।
तथा स्वास्थ्येन कृष्णोक्तौ स्वीयं चित्तमयूयुजत् ॥ ४५५ ॥
पुनश्चाकथयद्देवः सर्वस्वं मम पांडवाः ।
आयातोऽपि जगद्ग्रस्तुं ग्रसेयं न हि पांडवान् ॥ ४५६ ॥
संप्रदीप्ते यथा वह्नौ नवनीतं विलीयते ।
तद्वन्मे वदने पार्थ पश्यसि त्वं जगत्स्थितिम् ॥ ४५७ ॥
नहास्ति संशयः कोऽपि जगन्नाश उपस्थितः ।
यस्तेनेयं रणोद्युक्ता करोति व्यर्थवल्गनाम् ॥ ४५८ ॥
चतुरंगमिदं सैन्यं स्वसामर्थ्यमदेन हि ।
मत्वा बलिष्ठतां स्वस्य कालेन स्पर्धते वृथा ॥ ४५९ ॥
सर्वे चेमे सैन्यसंघाः शौर्यवृत्तिबलेन हि ।
ब्रुवंति चास्मत्पुरतः कृतांतोऽप्यतिदुर्बलः ॥ ४६० ॥
प्रतिसृष्टिं वयं कुर्मो हन्मो मृत्युं प्रतिज्ञया ।
विश्वं चुलुकीकुर्मो ब्रुवंत्येवं मदांधिताः ॥ ४६१ ॥
ग्रसामः क्ष्मामेकदैव दहामोर्ध्वं तथा वियत् ।
यत्र तत्र स्थितं वायुं रुंध्मो बाणगणैर्वयम् ॥ ४६२ ॥
येषां शब्दाः शश्वतीमास्तापोऽग्नेरपि दाहकः ।
ब्रुवंति प्राणहरणे कालकूटं नहि क्षमम् ॥ ४६३ ॥
गांधर्वेऽपि यथाभ्राणि खेऽवकाशोऽपि वा यथा ।
पुमांसो वा चित्रगतास्तथा वीरगणा इमे ॥ ४६४ ॥
किंवा मृगजलापूरो वर्त्मनाजगरोऽपि वा ।
शृंगारिताः पुत्तलिका इव शूराः स्थिता इमे ॥ ४६५ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ।

१ गंधर्वनगरे. २ यमवचारं लोके पोकळीति व्यवहरंति. ३ दारुनिर्मितः सर्पः.

मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

येषां देहस्थचैतन्यं पूर्वमेव हृतं मया ।
तेऽद्यालेख्यस्थवेताला इव जीवविवर्जिताः ॥ ४६६ ॥
यदि पुत्तलिकासूत्रं त्रुटितं चालनक्षमम् ।
तदा निरुपयुक्ता सा पतत्येव कुतोऽपि हि ॥ ४६७ ॥
तथैवायं सैन्यभारः क्षणान्नाशयितुं क्षमः ।
अतस्त्वरितमुत्तिष्ठ संप्रबुद्धो भवाऽर्जुन ॥ ४६८ ॥
पार्थ गोग्रहणे पूर्वं मोहिन्यस्त्रेण हि त्वया ।
वासांसि कुरुसैन्यानां हृतान्युत्तरहस्ततः ॥ ४६९ ॥
ततोऽपि दुर्बलमिदं सैन्यं रणसमुद्यतम् ।
हतमेकेन पार्थेनेत्येवं कीर्तिमुपार्जय ॥ ४७० ॥
न श्लेयं यशःप्राप्ती राज्यं स्याद्धस्तगं यथा ।
सव्यसाचिन्निमित्तं त्वं भव कौरवनाशने ॥ ४७१ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

न द्रोणमानं रक्षस्व तथा भीष्मभयं त्यज ।
कर्णे शल्यं कथं धार्यमिति शंकामपि त्यज ॥ ४७२ ॥
जयद्रथं कथं हन्मीत्येवं चिंतां न धारय ।
तथैव ख्यातवीराणां रणस्थानां न ते भयम् ॥ ४७३ ॥
सर्वे ते विकलाः संति केवलं शूरमानिनः ।
आर्द्रवस्त्रोन्मार्जनीयाः सिंहाश्चित्रगता यथा ॥ ४७४ ॥
अतः परं पांडव त्वां वीराणामस्ति का कथा ।
आभासमात्रं तिष्ठंति सर्वे ग्रस्ता मयाऽधुना ॥ ४७५ ॥
इमे मद्वदनं यांतो यदा दृष्टास्त्वयाऽर्जुन ।

नष्टमायुस्तदैवैषां शुष्कदेहा ह्यवस्थिताः ॥ ४७६ ॥
पार्थ त्वं शीघ्रमुत्तिष्ठ मयैव निहतान्जहि ।
अविचारेण मज्जस्व न वृथा रणसंकटे ॥ ४७७ ॥
परिकल्प्य स्वयं लक्ष्यं स्वतस्तद्विध्यते यथा ।
तेन न्यायेन पार्थ त्वं निमित्तं भव केवलम् ॥ ४७८ ॥
पार्थासंस्त्वद्वैरिणो ये व्याघ्रेणात्ताश्च जन्मतः ।
त्वं तद्यशस्तु संपाद्य भुंक्ष्व राज्यमकंटकम् ॥ ४७९ ॥
त्वद्द्रोहजा मदोन्मत्ता आसञ्जगति ये खलाः ।
ते पार्थेन हताः सर्वेऽप्यनायासेन संयुगे ॥ ४८० ॥
एवंविधा विश्वपटे कथाः स्युः सर्वतोमुखाः ।
निरंतरमतः पार्थ तैर्युध्वा विजयी भव ॥ ४८१ ॥

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृतांजलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

ज्ञानदेवोऽब्रवीदेवं कथां प्रोवाच संजयः ।
धृतराष्ट्राय सार्थंतमपूर्णाय मनोरथैः ॥ ४८२ ॥
ततः स्वर्गादुत्तरंत्या भागीरथ्या ध्वनिर्यथा ।
तथा गंभीरया वाण्या श्रीकृष्णोऽप्यवदत्तदा ॥ ४८३ ॥
वेगात्पतंत्येकदैव मेघधारा यथा दिवः ।
किंवा क्षुब्धः क्षीरसिंधुर्यथा मंदरमंथनात् ॥ ४८४ ॥
तथैव विश्वकंदेन कृत्वा गंभीरगर्जनाम् ।
पार्थायाऽगाधवचनं पुनः प्रोक्तं यथा पुरा ॥ ४८५ ॥
तत्स्वल्पमर्जुनः श्रुत्वा सुखदुःखाद्यवेदनात् ।
द्विगुणेन भयेनास्य सर्वांगं समकंपत ॥ ४८६ ॥
नम्रीभूय ततः पार्थो बध्वांजलिपुटं तदा ।
श्रीकृष्णपादयोस्तूर्णं स्वमूर्धानमधारयत् ॥ ४८७ ॥

यावद्वक्तुं प्रवृत्ते तावत्कंठो रुरोध ह ।
देव सौख्यं भयं वेदं त्वमेव कुरु निर्णयम् ॥ ४८८ ॥
कृष्णसंभाषणेनैवं पार्थस्यासीत्स्थितिस्तदा ।
इति गीताश्लोकपदैर्विनिर्णीतं मयाऽधुना ॥ ४८९ ॥
पार्थः पुनर्भीत इव कृष्णपादौ प्रणम्य च ।
अवदद्भवता स्वामिन्नेवमुक्तं न किं मम ॥ ४९० ॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवंति
सर्वे नमस्यंति च सिद्धसंघाः ॥ ३६ ॥

देव त्वयोक्तं कालोऽस्मि ग्रस्तं सर्वं मयेत्यपि ।
तदिदं सत्यमेवेति यदि मान्यं भवद्वचः ॥ ४९१ ॥
तथापि कालरूपेण कल्पांतसमयं विना ।
रक्षाकाले ग्रस्तमिति न विचारसहं खलु ॥ ४९२ ॥
तारुण्यं किं परित्यज्य वार्धक्यस्वीकृतिर्भवेत् ।
अतस्त्वदुक्तपरत्वं भवेदिति न भाति मे ॥ ४९३ ॥
किं दिवापि च मध्याह्ने सविताऽस्तं व्रजेत्कदा ।
असंभाव्यमनंतेदं न घटेतेति भाति माम् ॥ ४९४ ॥
सत्यं भवान्कालरूपोऽथाप्यवस्थात्रयानुगः ।
सबलास्ताः[1] स्वसमयं नोल्लंघेयुः कदाचन ॥ ४९५ ॥
यदोत्पत्तिर्भवत्यस्य न स्तः स्थितिलयौ तदा ।
स्थितिकाले न दृश्येते तथोत्पत्तिलयौ क्वचित् ॥ ४९६ ॥
तथा प्रलयकालेऽपि स्तो नोत्पत्तिस्थिती अपि ।
अवस्थात्रितयं हीदं नैवोल्लंघ्यं कदापि हि ॥ ४९७ ॥
तस्मादद्य स्थितेः काले सौख्यभोगस्थिते जने ।

---

१ ताः=नियता अवस्थाः.

असाम्यहमिति ब्रूपे तन्नर्तं भात्यनंत मे ॥ ४९८ ॥
संकेतेन तदा देवोऽब्रवीदुभयसैन्ययोः ।
क्षीणायुर्दर्शितं तेऽद्य म्रियेरन्समये जनाः ॥ ४९९ ॥
एवं सांकेतिकं कृष्णे पार्थाय ब्रुवति क्षणात् ।
अपश्यदर्जुनस्तावत्सैन्ययोः पूर्ववत्स्थितिम् ॥ ५०० ॥
तस्मिन्कालेऽवदत्पार्थो देव त्वमसि सूत्रधृक् ।
तेनास्य जगतोऽद्यैव संप्राप्ता पूर्ववत्स्थितिः ॥ ५०१ ॥
भवाब्धौ मज्जतां देव यस्त्वमेवासि तारकः ।
एवंविधायास्त्वत्कीर्तेः स्यादस्माकं स्मृतिः सदा ॥ ५०२ ॥
तां मुहुः स्मरतश्चित्ते भासते मे सुखोत्सवः ।
तेनैवाद्यानंदसिंधोस्तरंगेषु लुठाम्यहम् ॥ ५०३ ॥
देव त्वदनुरागेण जीवत्यानंदतो जगत् ।
तथैव क्लेशदान्दुष्टान्नाशयस्यधिकाधिकम् ॥ ५०४ ॥
त्रिलोकीराक्षसानां तु हृषीकेश भयं तव ।
अतो मयार्दिता दैत्याः पलायंते दिशो दश ॥ ५०५ ॥
सुराः सिद्धाः किन्नराश्च किं वा सर्वे चराचराः ।
दृष्ट्वा भवंतं हर्षेण प्रणमंति दिवानिशम् ॥ ५०६ ॥

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनंत देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

केनापि कारणेनास्तां ये नारायण राक्षसाः ।
त्वत्पादायप्रणम्यैव धावंतीतस्ततः सदा ॥ ५०७ ॥
त्वामेव नेदं प्रष्टव्यं वयं विद्मः स्वभावतः ।
मार्तंडस्योदये जातेऽधकारो न हि तिष्ठति ॥ ५०८ ॥
आकरस्त्वं प्रकाशस्य जातोऽस्मद्दृष्टिगोचरः ।
यत्पलाय्य भयेनाथ याताः सर्वे निशाचराः ॥ ५०९ ॥

इयतो दिवसान् राम नेदं ज्ञातं मया क्वचित् ।
भवतो महिमाऽगाधोऽखिलोऽस्माभिर्विलोकितः ॥ ५१० ॥
यतः सृष्टिरियं जाता जीववल्याश्च विस्तरः ।
सा माया भवदिच्छातः समुत्पन्ना हरेऽखिला ॥ ५११ ॥
निःसीम भवतः सत्त्वमसंख्याश्च गुणा अपि ।
त्वत्सामर्थ्यं तथाऽसीम त्वं देवानामपीश्वरः ॥ ५१२ ॥
आदिस्थानं त्रिलोक्यास्त्वमविनाशी त्वमेकलः ।
सदसच्च त्वमेवासि त्वमेवाऽतीत्य तत्स्थितः ॥ ५१३ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनंतरूप ॥ ३८ ॥

बीजं प्रकृतिपुंसोस्त्वं मायाया अंतिमास्पदम् ।
पुराणोऽनादिसिद्धोऽसि जगदीश त्वमात्मना ॥ ५१४ ॥
जगतो जीवनं त्वं च जीवमात्राश्रयोऽस्यपि ।
भविष्यतश्च भूतस्य ज्ञानमस्ति भवद्वशे ॥ ५१५ ॥
श्रुतीक्षणे सुखं भुंक्त एवं रूपं तथास्ति च ।
त्रिलोकी मायया व्याप्ता त्वमेवासि तदाश्रयः ॥ ५१६ ॥
त्वमेव परमः श्रेष्ठस्त्वं धामासि सुखस्य च ।
कल्पांते मायिकं ब्रह्म लुप्तं भवति च त्वयि ॥ ५१७ ॥
किं यदृच्छया त्वयैवायं निर्मितो विश्वविस्तरः ।
तं त्वा वर्णयितुं शक्तो भगवन् कोऽस्ति सृष्टिगः ॥ ५१८ ॥

वायुर्यमोऽग्निर्वरुणः शशांकः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनंतवीर्याऽमितविक्रमस्त्वं
सर्वं समाप्नोपि ततोऽसि सर्वः ॥ ४० ॥

क्व वस्तुरस्ति त्वद्दते कस्मिन्स्थाने न तिष्ठसि ।
अतस्त्वं यत्रयत्रासि नमस्तत्रास्तु मेऽनिशम् ॥ ५१९ ॥
अनंत वायुस्त्वमसि यमः शास्ता त्वमेव च ।
प्राणिमात्रमभिव्याप्य तिष्ठत्यग्निस्त्वमेव सः ॥ ५२० ॥
वरुणस्त्वं चंद्रमापि ब्रह्मा त्वं विश्वसर्जकः ।
ब्रह्मदेवस्यापि पिता परमोऽसि त्वमेव च ॥ ५२१ ॥
यद्यद्वस्तीतरत्सर्वं साकारं चाकृतेर्विना ।
तस्मै नतिस्तु सर्वस्मै जगन्नाथास्तु मे सदा ॥ ५२२ ॥
सानुरागेण पार्थेन सर्वतोऽपि नमस्कृतम् ।
पुनःपुनरुवाचैवं जगदीश नमोऽस्तु ते ॥ ५२३ ॥
पुनः साग्रां कृष्णमूर्तिं विलोक्य पांडुनंदनः ।
पुनश्चोच्चारयामास भगवन्नतिरस्तु ते ॥ ५२४ ॥
प्रत्यंगमवलोक्याथ समाधानमभूद्धृदि ।
अर्जुनः पुनरप्यूचे प्रभो तेऽस्तु नमोनमः ॥ ५२५ ॥
विश्वस्वरूपे दृष्टानि यानि भूतानि सर्वतः ।
तेभ्योऽर्जुनः समस्तेभ्यश्चकाराग्र नमोनमः ॥ ५२६ ॥
कृष्णरूपेऽत्यद्भुतानि दृष्ट्वा रूपाणि पांडवः ।
साश्चर्यचित्तो ह्यवदन्नमस्तेऽस्तु जगत्प्रभो ॥ ५२७ ॥
असमर्थाधिकं स्तोतुं स्वस्थः स्थातुं च नाशकत् ।
अधिकं प्रेमभावेन जगर्जोच्चैस्तदार्जुनः ॥ ५२८ ॥
किं बहूच्चयैवमेवाथ नमस्कृत्वा सहस्रशः ।
पुनरूचे श्रीहरेऽद्य सन्मुखाय नमोऽस्तु ते ॥ ५२९ ॥
पृष्ठभागोऽस्ति नास्तीति विचारावसरो न मे ।
पृष्ठतोऽपि नमस्तेऽस्तु पृष्ठं यद्यस्ति ते प्रभो ॥ ५३० ॥

मत्पृष्ठतस्तिष्ठसीति भावनं पृष्ठवर्तिनः ।
विमुखत्वं सन्मुखत्वं न च संभवति त्वयि ॥ ५३१ ॥
तव प्रत्यंगसंख्यानमहं कर्तुं न च क्षमः ।
तस्मात्ते सकलांगेभ्यः सर्वात्मक नमोऽस्तु मे ॥ ५३२ ॥
त्वमस्यनंत शक्त्यब्धिरपारस्त्वत्पराक्रमः ।
यतः समोऽसि सर्वेषां सर्वात्मक नमोऽस्तु ते ॥ ५३३ ॥
सर्वस्मिंश्च यथाकाशेऽवकाशोऽस्ति भृतोऽखिले ।
सर्वांतर्यामिरूपेण व्यापकत्वं प्रभोऽस्ति ते ॥ ५३४ ॥
किं बहूक्त्या श्रीहरे त्वं सर्वांतर्व्याप्य तिष्ठसि ।
क्षीरसिंधोस्तरंगाश्च संति क्षीरमया यथा ॥ ५३५ ॥
तस्मादेव न सर्वेभ्यः पृथगास्से कदाचन ।
अतस्त्वमेक एवासीत्यभूदनुभवो मम ॥ ५३६ ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥

तवैवं वैभवं देव नास्माभिर्विदितं क्वचित् ।
अतः सुहृन्न्यायेनैव देव व्यवहृतं मया ॥ ५३७ ॥
कथं वाऽनुचितं जातं मार्जितं सुधया गृहम् ।
किंवा कामगवीं दत्वा स्वीकृतो मेषतर्णकः ॥ ५३८ ॥
लब्ध्वा स्पर्शमयं शैलं तत्खंडैर्दुर्गमाहितम् ।
किंवा कल्पद्रुमं छित्त्वा स्वक्षेत्रस्यावृतिः कृता ॥ ५३९ ॥
चिंतामणिखनिं लब्ध्वा न ज्ञातेति विवर्जिता ।
एवं त्वत्संगतिः सर्वा व्यर्थाऽभूत्स्नेहभावतः ॥ ५४० ॥
उपस्थितो रणो योऽद्य का वार्ता तस्य ते पुरः ।
परं प्रत्यक्षदेवोऽपि त्वं मया सारथिः कृतः ॥ ५४१ ॥

---

१ स्पर्श- परिसमणिरत्नम्.

सामार्थं कौरवगृह्हे प्रेषितोऽस्माभिरीश्वर ।
वाणिज्यार्थं स विश्वेश विक्रीतोऽसि मया वत ॥ ५४२ ॥
योग्यंस्वायामसौख्यं त्वामज्ञात्वा मूढवन्मया ।
भवदग्रेऽपि यत्स्वासिन्नुपरोधो मुहुः कृतः ॥ ५४३ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

श्रीहरे मूलभूतस्त्वं सभ्येष्वप्यग्रणीरसि ।
संबंधित्वं पुरस्कृत्य विनोदेनासि कल्पितः ॥ ५४४ ॥
गतोऽभवं भवद्गेहे सत्कृतोऽसि तदा त्वया ।
सन्मानं तमनादृत्य क्रोधेनाहं गतस्तदा ॥ ५४५ ॥
पादस्पर्शेनानुनीतः शार्ङ्गपाणे तदा त्वया ।
स्वैरं कृता दुष्कृतिश्च बहुवारं मया त्वयि ॥ ५४६ ॥
स्वज्ञातृत्वाभिमानेन तवाग्रे विमुखोऽभवम् ।
क्वास्ति मे योग्यता देव यत्स्वल्पापि तवाग्रतः ॥ ५४७ ॥
दंडादंडि त्वया साकं कृतं द्वैरथमेव च ।
अक्षक्रीडासमायोगे तिरस्कारः कृतस्तव ॥ ५४८ ॥
याचितं चोत्तमं वस्तु ज्ञानमुक्तं भवत्पुरः ।
पांडवाः स्मो वयं कृष्ण का ते प्रौढिरितीरितम् ॥ ५४९ ॥
त्वयि सामान्यतो जाता ह्यपराधाः सहस्रशः ।
सर्वे तेऽज्ञानतश्चेति पादग्राहं ब्रवीमि ते ॥ ५५० ॥
भोजनावसरे लोभाच्छ्रीहरे मां स्मरत्यपि ।
तदोपविष्टः स्वस्थाने गर्वेणासि न चोत्थितः ॥ ५५१ ॥
भवतोऽन्तःपुरे गंतुं नैव शंका धृता मया ।
मयतः सविधे तल्पे निद्रितोऽसि यथासुखम् ॥ ५५२ ॥

---

१ योगिनां स्वायामः=प्राणायामः समाधिरित्यर्थः तत्सौख्यरूपम्.

संबोधितः 'कृष्ण' इति भवान्योदववन्मतः ।
गच्छंश्च पथि रुद्धस्त्वं मया शपथपूर्वकम् ॥ ५५३ ॥
एकासने चोपविष्टः शब्दो न गणितस्तव ।
एवं परिचयाधिक्याद्वमानो हरे कृतः ॥ ५५४ ॥
किं किं वा कथयाम्यद्य भो अनंत तवाग्रतः ।
त्वदनंतापराधानां केवलं राशिरस्म्यहम् ॥ ५५५ ॥
प्रत्यक्षं वा परोक्षं वाऽभवन्वार्ताश्च निंदिताः ।
सर्वा बालस्य मातेव क्षमस्व भगवन्मम ॥ ५५६ ॥
सरिद्भिर्मलिनं नीरं प्रवाहादाहृतं यदि ।
तत्सर्वं स्वीकरोत्यब्धिस्तासां नान्या गतिर्यतः ॥ ५५७ ॥
प्रीत्याथवा प्रमादेन यदमर्यादया कृतम् ।
भाषितं वाऽतिरेकेण तन्मुकुंद क्षमस्व माम् ॥ ५५८ ॥
भवतः शांतशीलेन जीवान्धारयति क्षितिः ।
अतः करोमि विज्ञप्तिं सा स्वल्पैव भवेत्किल ॥ ५५९ ॥
तस्मादगम्य भगवन् विनयाच्छरणागतम् ।
अनंतानपराधान्मे क्षमस्व त्वं कृपानिधे ॥ ५६० ॥

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४३ ॥

ज्ञातोऽस्ति तेऽद्य महिमा यथावत्पुरुषोत्तम ।
यथा चराचरस्यास्य देव त्वमसि जन्मभूः ॥ ५६१ ॥
तथा हरिहरादीनां त्वमेव परदेवता ।
त्वं वेदेभ्योऽप्यापयिता सर्वेषामसि गुरुर्महान् ॥ ५६२ ॥
श्रीराम त्वं गभीरोऽसि सर्वभूतसमानदृक् ।
गुणैरप्रतिमोऽसि त्वमद्वितीयोऽसि सर्वतः ॥ ५६३ ॥
त्वत्तुल्यस्तु न कोऽप्यस्ति किमर्थं प्रतिपादनम् ।
त्वन्निर्मिते वियत्यस्मिन्जगत्संमाति चाखिलम् ॥ ५६४ ॥

कोऽप्यस्ति त्वत्सम इति कल्पनापि त्रपास्पदा ।
अतस्त्वदधिकस्यात्र मास्तु वार्तापि सर्वथा ॥ ५६५ ॥
तस्मात्रिलोक्यामेकस्त्वं नान्यस्त्वत्सदृशोऽस्ति भोः ।
असमर्थो वर्णयितुं त्वन्माहात्म्यमलौकिकम् ॥ ५६६ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

एवमुक्त्वा तदा पार्थः कृष्णं नत्वा च दंडवत् ।
अष्टौ च सात्विका भावाः पार्थस्यांगेऽस्फुरन्मुहुः ॥ ५६७ ॥
ततोऽब्रवीत्प्रसीदेति वागभूद्गद्गदा मम ।
तथापराधसिंधोर्मां स्वामिन्निष्कासयाऽधुना ॥ ५६८ ॥
त्वं जगत्सुखकर्तासि न ज्ञातः सौहृदान्मया ।
जगदीशं त्वां वदतामाश्चर्यं बहु कारितम् ॥ ५६९ ॥
त्वं स्वयं वर्णनीयः सन्मयि रुष्टेऽविचारतः ।
वृथा मलापिनि दयां कृत्वाऽहं सांत्वितो जने ॥ ५७० ॥
एवं नानापराधानामियत्ता नैव विद्यते ।
श्रीमुकुंद प्रमादेभ्यः सर्वेभ्यो रक्ष रक्ष माम् ॥ ५७१ ॥
प्रार्थनां कर्तुमप्येवं नह्यस्ति मम योग्यता ।
तथाप्यपत्यवत्पित्रे किंचित्स्नेहाद्ब्रवीमि ते ॥ ५७२ ॥
पुत्रापराधान्शतशः क्षाम्यत्येव यथा पिता ।
तद्वदात्मीयभावेन कृपया त्वं क्षमां कुरु ॥ ५७३ ॥
यथा मित्रकृतौद्धत्यं क्षमते मित्रमादरात् ।
तथाऽपराधाः सोढव्यास्त्वया मे मित्रभावतः ॥ ५७४ ॥
प्रियेभ्यो भूरि सन्मानं प्रियो नापेक्षते यथा ।
अस्मद्गृहेऽपाकृतानि विप्रोच्छिष्टान्यपि त्वया ॥ ५७५ ॥
अत्यंतमित्रनिकटे सुगूढमपि संकटम् ।
वक्तुं मयैव संकोचो मित्रभावेन चोभयोः ॥ ५७६ ॥

यथा तनुमनोभावैर्यस्यै देहः समर्पितः।
तस्मिन्कांते न संकोचो गूढं वर्क्त्रं स्त्रियः कचित् ॥ ५७७ ॥
एवं भवानपि स्वामिन्ननुनीतोऽसि यन्मया।
यन्नत्वेनानुनेतुमस्त्यन्यदपि कारणम् ॥ ५७८ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

संप्रार्थितोऽसि स्नेहेन विश्वरूपदिदृक्षया।
स पित्रोः स्थानभूतेन हेतुर्मे पूरितस्त्वया ॥ ५७९ ॥
आनाय्य कल्पतरवः प्रांगणे रोपिता यथा।
किं कामधेनुवत्सा वा क्रीडार्थमुपकल्पिताः ॥ ५८० ॥
क्रीडार्थं याचितास्तारा गेंदुकार्थं च चंद्रमाः।
तत्सर्वं पूरितं मातरीप्सितं मे तदा तदा ॥ ५८१ ॥
बिंदुमात्रा सुधाऽप्राप्या कृत्वा तस्यास्तु वर्षणम्।
क्षेत्रेषु चिंतामणय उप्ता मास्सु चतुर्ष्वपि ॥ ५८२ ॥
यन्ममेच्छानुसारेण दर्शितं कृपया त्वया।
ब्रह्मणा वा शंकरेण तन्न श्रुतमपि कचित् ॥ ५८३ ॥
कुतस्तद्दर्शनं तेषां न यच्छ्रुतिशिरोऽलभत्।
अंतःस्वरूपगो ग्रंथिर्मदर्थं मोचितस्त्वया ॥ ५८४ ॥
कल्पादारभ्याद्यतनप्रचलद्घटिकावधि।
कियंति मम जन्मानि जातानि धरणीतले ॥ ५८५ ॥
विचारिते सूक्ष्मदृशा स्वामिन्सर्वेषु जन्मसु।
न दृष्टा न श्रुता वापि वार्तेयं सहसा मया ॥ ५८६ ॥
विश्वरूपांगणप्रांते प्रवेशो न धियो भवेत्।
तस्यांतः कल्पनमपि स्यात्कथं प्राकृतस्य हि ॥ ५८७ ॥
तस्य दृष्ट्यालोकनस्य विचारोऽपि मनोतिगः।
किं बहूक्त्या, स्वरूपं तद्दृष्टं केनापि न कचित् ॥ ५८८ ॥

भवतो विश्वरूपं तदेव मां दर्शितं त्वया ।
तेनापि हर्षभरितमत्यंतमभवन्मनः ॥ ५८९ ॥
श्रीहरेऽधैर्यमिच्छामि संत्वालापास्त्वया सह ।
तथैवालिंगनार्थाय संगतिः स्तान्निरंतरम् ॥ ५९० ॥
अथेच्छां चेत्पूरयेयं वच्मि केन मुखेन ते ।
आलिंगनं वा कं दध्यामपारो दृश्यते भवान् ॥ ५९१ ॥
धावनं वायुना स्याद्वाऽऽलिंगनं वियतः क्वचित् ।
सागरे च जलक्रीडा तदिदं घटते कथम् ॥ ५९२ ॥
अतोऽस्य विश्वरूपस्य दृश्यते मां महद्भयम् ।
तदावृणु बृहद्रूपमित्येवं प्रार्थनास्ति मे ॥ ५९३ ॥
ततश्चराचरं शांत्या संतिष्ठेच्च सुखं गृहे ।
तथा चतुर्भुजं रूपं श्रीहरे दर्शयाऽधुना ॥ ५९४ ॥
अभ्यस्ते सुचिरं योगे प्राप्तव्यमिदमेव हि ।
आलोचितेषु शास्त्रेषु सिद्धांतोऽप्ययमेव च ॥ ५९५ ॥
यदि सर्वे कृता यज्ञाः फलं तेषामिदं महत् ।
इदमेव परं लक्ष्यं कृते तीर्थावगाहने ॥ ५९६ ॥
कृतं यद्यत्तपं दानं पुण्यं संपादितं च यत् ।
तस्माच्चतुर्भुजस्यास्य प्राप्तिरेव महत्फलम् ॥ ५९७ ॥
देव त्वत्सौम्यरूपस्याधिकं प्रेम विवर्धते ।
तदेव दर्शयित्वाद्य मम चिंतां निवारय ॥ ५९८ ॥
त्वं सर्वस्यांतरं वेत्सि विश्वस्य जनको भवान् ।
देवाधिदेव पूज्योऽसि प्रसन्नो भव सर्वथा ॥ ५९९ ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

देवाऽसि नीलवर्णस्त्वं वियन्नीलोत्पलं तथा ।
रंजितं तेन वर्णेनेंद्रनीलोऽप्यधिकं यमी ॥ ६०० ॥

यथा पीचे सुगंधः स्यादानंदस्य करावपि ।
जानुभ्यां मदनेनापि प्राप्तं सौंदर्यमुत्तमम् ॥ ६०१ ॥
मुकुटश्चापि भावत्को भवन्मूर्ध्नैव राजते ।
भूषणैर्भूषणत्वं च भवदंगैः समर्जितम् ॥ ६०२ ॥
वियतींद्रधनुर्मध्ये विराजंते यथा घनाः ।
वैजयंती तथा माला भवत्कंठे विराजते ॥ ६०३ ॥
उदारा ते गदा देव मोक्षं दत्तेऽसुरानपि ।
तथैव चक्रं गोविंद हस्ते देदीप्यते परम् ॥ ६०४ ॥
किं ब्रूयामधिकं स्वामिन्सौम्यं रूपं निरीक्षितुम् ।
उत्कंठितोऽस्मि भगवन्सौम्यमूर्तिर्भवाऽधुना ॥ ६०५ ॥
वैभवं विश्वरूपस्य दृष्ट्वा तृप्ते दृशौ मम ।
श्रीकृष्णदर्शनार्थाय क्षुधिते स्तोऽधुनाधिकम् ॥ ६०६ ॥
नहान्यद्द्रष्टुमिच्छामि साकारात्कृष्णदर्शनात् ।
विश्वरूपमपूर्णं तद्यावत्कृष्णो न दृश्यते ॥ ६०७ ॥
न कृष्णदर्शनादन्यद्विद्यते भुक्तिमुक्तिदम् ।
आवृत्येदं घोररूपं चतुर्बाहुर्भवाऽधुना ॥ ६०८ ॥

श्रीभगवानुवाच ।

मया प्रसन्नेन तवाऽर्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनंतमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

श्रुत्वैवमर्जुनेनोक्तं श्रीकृष्णो विस्मितोऽभवत् ।
उवाच नान्योऽविचारी त्वदन्यः कोऽपि दृश्यते ॥ ६०९ ॥
पार्थाऽलभ्यं प्राप्य वस्तु तच्चोपमविगण्य च ।
भीत्या ब्रवीषि यच्चैवं कथं त्वमसि भीरुकः ॥ ६१० ॥

---

१ भावसंज्ञकरसस्य.

अहं प्रसन्नः कस्मैचित्तत्प्रेमोपरि नांततः ।
नैतावदपि कस्मैचित्प्रियाः प्राणाः समर्पिताः ॥ ६११ ॥
तथापीच्छां पूरयितुं तवांऽतध्यानमाचरम् ।
भवदर्थमिदं कृच्छ्राद्विश्वरूपं धृतं मया ॥ ६१२ ॥
प्रसन्नता त्वत्प्रियार्थं ममाद्याभूत्पिशाचवत् ।
अतोऽयमुच्छ्रितः पार्थ विश्वरूपध्वजो मया ॥ ६१३ ॥
ममेदमपरंपारं विश्वरूपं परात्परम् ।
अवतारा भवंत्यस्माद्रामकृष्णादयोऽपि हि ॥ ६१४ ॥
तेजोमयमिदं ज्ञानं विश्वव्यापकमेव मे ।
यन्मूलबीजं सर्वेषामस्त्यनंतं तथाऽचलम् ॥ ६१५ ॥
अर्जुनान्येन केनापि पूर्वं दृष्टं न वा श्रुतम् ।
नैवेदं साधनैः साध्यमित्येवं विद्धि सर्वथा ॥ ६१६ ॥

न वेदयज्ञाध्ययनैर्न दानै-
न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

एतत्स्वरूपं संप्राप्य वेदा मूकत्वमागताः ।
परावृत्ता याज्ञिकाश्च स्वर्गात्पुण्यक्षये स्वयम् ॥ ६१७ ॥
योगिनोऽपि यदप्राप्य स्वं योगाभ्यासमत्यजन् ।
न चाध्ययनसौरस्यं यदीयप्रापणेऽस्ति हि ॥ ६१८ ॥
सत्कर्माणि प्रसिद्धानि स्वमहत्त्वभ्रमेण च ।
यदर्थं धावमानानि स्वर्गावधि गतानि हि ॥ ६१९ ॥
दृष्ट्वैश्वर्यमिदं त्यक्त्वोग्रत्वमासंस्तपोधनाः ।
तपसां साधनमपि यस्माद्दूरेऽवतिष्ठते ॥ ६२० ॥
मनुष्यलोके नैतावद्दृष्टं केनापि यत्नतः ।
दुर्दर्शं विश्वरूपं तत्पार्थ साक्षात्कृतं त्वया ॥ ६२१ ॥
अस्य ध्याने समर्थस्त्वमेकोऽसि धरणीतले ।
कदापीदं महद्भाग्यं साक्षाद्ब्रह्मापि नाऽलभत् ॥ ६२२ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

धन्यं मन्यस्व स्वं पार्थ विश्वरूपविलोकनात् ।
न भीस्तत्र त्वया किंचिदस्माच्छ्रेष्ठतरं खलु ॥ ६२३ ॥
पार्थ दैवाद्यदि प्राप्तः समुद्रोऽमृतपूरितः ।
तस्मिन्बुडेयेति भीत्या कस्त्यजेत्सुविवेकवान् ॥ ६२४ ॥
सुवर्णपर्वतं दृष्ट्वा नायं चालयितुं क्षमः ।
इति मत्वा तिरस्कारं कः कुर्यात्तस्य बुद्धिमान् ॥ ६२५ ॥
दैवाच्चिंतामणिं लब्ध्वं जडं मत्वैव कस्त्यजेत् ।
कश्च प्राप्तां कामधेनुं तत्पोषणभयात्त्यजेत् ॥ ६२६ ॥
हिमांशुं गृहमायातमुष्णभीत्या त्यजेन्नु कः ।
प्रतिच्छायां करोतीति सूर्यं गच्छेति को वदेत् ॥ ६२७ ॥
तद्वत्पार्थाधुना विश्वरूपैश्वर्यं भवत्करे ।
प्राप्तं तथापि व्यामोहस्तव चित्तेऽभवत्कथम् ॥ ६२८ ॥
पार्थ मूढ इवाभासि किं वच्मि पुरतस्तव ।
देहं त्यक्त्वाऽलिंगनाय छायां धावस्यबुद्धवत् ॥ ६२९ ॥
मनोयैकस्त्ययोगेन द्रष्टुं रूपं चतुर्भुजम् ।
यत्प्रार्थ्यते त्वया पार्थ त्रिकालाबाधितं च तत् ॥ ६३० ॥
तस्माच्चतुर्भुजस्यास्थां संत्यज्येतः परं पुनः ।
अनास्थां विश्वरूपेऽस्मिन्पार्थ मा कुरु दुर्दरो ॥ ६३१ ॥
विश्वरूपमिदं घोरं विकरालं च यद्यपि ।
तथापि पूर्णं विश्वासमेतस्मिन्धारयाऽर्जुन ॥ ६३२ ॥
यद्वद्त्यंतकृपणो धत्ते गुप्तधने मनः ।
करोति यच्च कर्तव्यं तच्छरीरेण केवलम् ॥ ६३३ ॥

अजातपक्षबालेषु चित्तं संस्थाप्य पक्षिणी ।
कणलोभेन विश्वस्मिन्यथा भ्रमति खेऽनिशम् ॥ ६३४ ॥
धेनुश्चरत्यरण्येऽपि चित्तं रक्षति तर्णके ।
तथा स्थिरीकुरु प्रेम विश्वरूपे दिवानिशम् ॥ ६३५ ॥
सामान्यतश्चित्तशांत्यै बाह्यात्कारेण सर्वदा ।
भजेच्चतुर्भुजां मूर्तिं गुणनामादिकं स्मरन् ॥ ६३६ ॥
मुहुर्मुहुरिदं वच्मि मदुक्तं त्वं न विस्मर ।
शश्वन्निधेहि सद्भावं विश्वरूपे ममार्जुन ॥ ६३७ ॥
अदृष्टपूर्वमालोच्य यत्त्वां भयमुपस्थितम् ।
तदुज्झित्य प्रेमभावं विश्वरूपेऽद्य धारय ॥ ६३८ ॥
त्वदीप्सितं दर्शयामीत्यब्रवीद्विश्वतोमुखः ।
स्वेष्टां चतुर्भुजां मूर्तिं सुखेनालोचयार्जुन ॥ ६३९ ॥

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

एवमुक्त्वा क्षणादेव देवोऽभूत्पूर्वरूपधृक् ।
नाश्चर्यं ह्येवमेवास्ति प्रेम्णो माहात्म्यमद्भुतम् ॥ ६४० ॥
कृष्णः साक्षात्परं ब्रह्म यद्विराड्रूपमांतरम् ।
अर्जुनायार्पयामास तत्तस्मै नह्यरूरुचत् ॥ ६४१ ॥
गृहीत्वा किं त्यजेद्वस्तु सद्रत्नमपि दूषयेत् ।
किंवा कन्यां निरीक्ष्यापि नेष्टेति कथयेत्पुनः ॥ ६४२ ॥
तद्वन्महत्प्रयासेनोपदेशोऽकारि वैश्वंकः ।
पार्थाय सोऽप्यपिः प्रेम्णः श्रीकृष्णेन प्रदर्शितः ॥ ६४३ ॥
स्वर्णेष्टकां विलाप्याथालंकारः स्वेप्सितः कृतः ।
परं स रोचते नेति कुर्यात्तस्येष्टकां पुनः ॥ ६४४ ॥

---

वैश्वरूपनिष्ठाविषयकः. २ विप्यहपं यथावस्थं स्वर्णम्.

कृत्वा तिरः स्ववपुरर्जुनहेतुपूर्वं
प्राचीकटत्सुविपुलं निजविश्वरूपम्।
तत्रापि भीतमथ पूर्ववपुर्दिदृक्षुं
पार्थं विलोक्य च बभूव चतुर्भुजोऽसौ ॥ ६४५ ॥
शिष्यतापं सोढुमर्हाः क्व संति गुरवो भुवि।
न जाने प्रेममाहात्म्यमेवं प्रोवाच संजयः ॥ ६४६ ॥
विश्वं व्याप्याखिलमपि विश्वरूपं धृतं च यत्।
तच्च सांगं कृष्णरूपेक्षणमात्रादधारयत् ॥ ६४७ ॥
परात्मरूपे जीवानां समावेशो भवेद्यथा।
किंवा बीजे समाविश्यस्तिष्ठति द्रुः सविस्तरः ॥ ६४८ ॥
स्वप्ने दृष्टोऽपि विस्तारो नैव तिष्ठति जागरे।
तथा चतुर्भुजो भूत्वा हृता विश्वस्मृतिस्तदा ॥ ६४९ ॥
सूर्ये लुप्ता यथा कान्तिर्मेघा लुप्यंति खे यथा।
अकूपारो वर्धितोऽपि स स्वसिन्नेव लीयते ॥ ६५० ॥
विलोक्यार्जुनहार्दं च यासीद्विश्वपटावृतिः।
समुद्घाट्य च सैवात्र संप्रसृत्यैव दर्शिता ॥ ६५१ ॥
तद्दीर्घत्वं रंगरूपे विलोक्य ग्राहकस्तदा।
यतः पार्थो न जग्राह पटः पूर्ववदावृतः ॥ ६५२ ॥
यद्विश्वरूपाकारेण व्याप्तमासीज्जगत्त्रयम्।
तदेव सौम्यमभवत्साकारं च चतुर्भुजम् ॥ ६५३ ॥
अस्त्वेवं यदनंतेन सौम्यं कृत्वा निजं वपुः।
आश्वासितस्तदा पार्थः श्रीकृष्णेन क्षणात्पुनः ॥ ६५४ ॥
कश्चित्स्वर्गं गतः स्वप्नेऽप्यकस्माज्जागृतस्ततः।
यथाश्चर्यं भाति तस्य पार्थाय समभूत्तथा ॥ ६५५ ॥
यदा भवेद्गुरुकृपा तत्त्वज्ञानं तदा भवेत्।
तथा दृष्ट्वा कृष्णरूपं पार्थोऽप्यंतरतृतुपत् ॥ ६५६ ॥
मनस्यकल्पयच्चैवं यद्विश्वपटलांततः।
चतुर्भुजं तिरोभूतं तत्साक्षादधुनाऽभवत् ॥ ६५७ ॥

१ विश्वरूपवस्त्रस्यावृतिः=घडीति भाषायाम्

किंतु कालो जितो वाथ महावायुश्च हारितः ।
किं वा स्वबाहुबलतो लंघिताः सप्त सागराः ॥ ६५८ ॥
यथा तोषो भवेत्तेन दुःशक्येन कृतेन हि ।
तथाऽभूदुग्ररूपेण चतुर्भुजनिदर्शनात् ॥ ६५९ ॥
ततः सूर्यास्तसमये भांति भानि नभस्तले ।
तथा दृष्टा लोकसंघाः पृथिव्यां पूर्ववत्तदा ॥ ६६० ॥
पुनर्दृष्टाः कुरुक्षेत्रे गोत्रजाश्चोभयोर्दले ।
शस्त्राणि वीरा वर्षंतो नैके पार्थेन सर्वतः ॥ ६६१ ॥
स्वकीयोऽपि रथो दृष्टस्तत्रत्ये बाणमंडपे ।
लक्ष्मीकांतश्च धूःसंस्थो रथाधश्च स्वयं स्थितः ॥ ६६२ ॥

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

यथाऽर्थितं तथा दत्तं सर्वं देवेन तत्क्षणे ।
तद्दृष्ट्वैवाब्रवीत्पार्थो जीवितोऽस्मीति भाति माम् ॥ ६६३ ॥
बुद्धिमुज्झित्य यज्ज्ञानं वने यन्नाम भीतितः ।
तथाऽहंकारेण साकं मनोऽभ्रमदितस्ततः ॥ ६६४ ॥
स्वं विस्मृतानींद्रियाणि शब्दहीना च वागभूत् ।
एवं शरीरग्रामेऽस्मिन्दुरवस्थाऽभवन्मम ॥ ६६५ ॥
मुहुस्तस्याखिलस्यापि संप्राता पूर्वचरित्स्थितिः ।
यद्दृष्ट्या स्वेप्सिता शश्वत्कृष्णमूर्तिश्चतुर्भुजा ॥ ६६६ ॥
अंतरेवं सुखाविष्टोऽब्रवीत्कृष्णं तदार्जुनः ।
देव ते मानुषं रूपं दृष्टमद्येप्सितं मया ॥ ६६७ ॥
स्वापत्याय यथा माता प्रेम्णा पाययति स्तनम् ।
सांत्वयत्युद्धृतं चापि कृतं देव तथा मम ॥ ६६८ ॥
विश्वरूपसमुद्रेऽहमासं व्यामात्तवीचिकः ।
त्वया चतुर्भुजद्रोण्या प्राप्तोऽस्म्यद्य ततस्तटे ॥ ६६९ ॥

१ उग्रं विश्वरूपं तस्य तिरोधानेन. २ व्यामेन बाह्वोरंतरेण आत्ताः आक्रान्ता वीचयो येन.

दर्शितं द्वारकाधीश नहीदं विश्वदर्शनम् ।
किंतु मरुसदृशे शुष्कतरौ वृष्टो घनस्त्वया ॥ ६७० ॥
किंवाऽऽसं तृषितो देव संप्राप्तश्चामृतोदधिः ।
प्राप्तश्च तेन विश्वासो जीवितोऽसीति निश्चितम् ॥ ६७१ ॥
हृदंगणे ममाप्यद्य रूढा हर्षलताः स्वयम् ।
अद्यानंदेन संजातः संगमः कृपया तव ॥ ६७२ ॥

श्रीभगवानुवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥ ५२ ॥

अर्जुनेनैवमुक्ते तु कृष्णः प्रोवाच तं प्रति ।
ब्रूहि मैवं, विश्वरूपे विश्वासं कुरु सर्वदा ॥ ६७३ ॥
भज भक्त्या चतुर्बाहुं याहृदृश्यैव केवलम् ।
एवं यत्पूर्वमेवोक्तमद्य किं विस्मृतं त्वया ॥ ६७४ ॥
पार्थाधस्य करे प्राप्तो मेरुः स्वर्णमयोऽपि हि ।
स मच्चित्ते लघुर्भाति मनोवृत्तिरनीदृशी ॥ ६७५ ॥
मया महद्विश्वरूपं दर्शितं पुरतस्तव ।
यच्छंकरोऽपि तपसा न कदाचिदवाप्तवान् ॥ ६७६ ॥
अष्टांगयोगा यैः कष्टात्साधिता अपि योगिभिः ।
सुदुर्दर्शमिदं तेषां विश्वरूपं ममेदृशम् ॥ ६७७ ॥
तदेकदालोकयामः किंचिद्रूपमितीच्छताम् ।
सर्वेषामपि देवानां वृथायुर्गतमर्जुन ॥ ६७८ ॥
मस्तकेऽजलिमाधाय पिपासाकुलिताः सदा ।
विलोकयन्तश्चाकाशं मेघार्थं चातका यथा ॥ ६७९ ॥
तथा सुरगणाः सर्वे यद्दिदृक्षार्थमाकुलाः ।
प्रत्यहं प्रहरानष्टौ यच्च ध्यायंत्यनारतम् ॥ ६८० ॥
न तेषु केन स्वप्नेऽपि विश्वरूपं निरीक्षितम् ।
अनायासेन तद्दिव्यं साक्षाद्दृष्टं त्वयाऽर्जुन ॥ ६८१ ॥

१ अनीदृशी अनवस्थां प्राप्ता.

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

अवगंतुं विश्वरूपं साधनानि न संति हि ।
अतो निगम-शास्त्राणि मूकीभूय स्थितान्यलम् ॥ ६८२ ॥
विश्वरूपस्य पंथानं गंतुं तत्प्राप्तये स्वतः ।
कस्यापि तपसः शक्तिः सर्वथा नैव विद्यते ॥ ६८३ ॥
यथा त्वया विश्वरूपमनायासेन लक्षितम् ।
सुलभं न तथान्यस्य यज्ञैर्दानैर्व्रतैरपि ॥ ६८४ ॥
तथैकेनैव योगेन लब्धुं शक्योऽहमर्जुन ।
अनन्या दृढ़ता भक्तिर्मियेत यदि मां स्वतः ॥ ६८५ ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

तत्रैवमीप्सिता भक्तिरनन्यगतिका दृढा ।
यथा पर्जन्यधाराणां गतिर्नास्ति महीं विना ॥ ६८६ ॥
किंवा भागीरथी यद्वद्गृहीत्वा जलसंचयम् ।
अनन्यगतिकीभूय यथा गच्छति सागरम् ॥ ६८७ ॥
तथा करोति यः प्रेमात्यंतं भावपुरःसरम् ।
स्यान्मद्रूपे स्थितिस्तस्य सोऽते मद्रूपतां व्रजेत् ॥ ६८८ ॥
आदौ मध्येंऽतेऽपि यथा मधुरः क्षीरसागरः ।
तथैव कालत्रयेऽपि व्यापकत्वात्समोऽस्म्यहम् ॥ ६८९ ॥
तथा प्रारभ्य मां यावद्यत्सर्वत्रापिपीलिकाम् ।
क्वापि मद्भजने यस्य द्वैतमल्पं न विद्यते ॥ ६९० ॥
यदैवं वृत्तिरंतः स्यात्तदा विश्वाववोधनम् ।
बोधे स्वाभाविकी दृष्टिस्तद्वद्भवति तत्क्षणम् ॥ ६९१ ॥
यथा प्रज्वालिते काष्ठे काष्ठशब्दो विलुप्यते ।
तदेव स्याद्वह्निरूपं प्रज्वलन्मूर्तिमद्यथा ॥ ६९२ ॥

१ विश्वं विराट्रूपम्.

न यावदुदितः सूर्यस्तावद्ध्वांतमयं नभः ।
सूर्योदये तु सर्वत्र प्रकाशः स्याद्यथोज्वलः ॥ ६९३ ॥
तथा मद्रूपानुभवेऽहंकारोऽपि विलुप्यते ।
तस्य लोपे द्वैतभावः सहजं नश्यति क्षणात् ॥ ६९४ ॥
ततोऽहं त्वं च सकलमहमेवास्मि केवलम् ।
बहुना किं निश्चलः सन्सामरस्यं स विंदति ॥ ६९५ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥ ५५ ॥

योऽखिलान्यपि कर्माणि मत्प्रीत्यर्थं करोति हि ।
तथाच मामृते यस्य नान्यदस्ति प्रियं क्वचित् ॥ ६९६ ॥
यस्येहामुत्र सकलमहमेवास्मि केवलम् ।
तस्यैव जीवितफलं मदर्थं येन रक्षितम् ॥ ६९७ ॥
यो भूतशब्दं विस्मृत्य तत्र मामेव पश्यति ।
अतो भूतेषु निर्वैरः सर्वत्र भजते स माम् ॥ ६९८ ॥
एवंभूतस्य भक्तस्य यदा देहः प्रणश्यति ।
स तदा निर्ममो भूत्वा मत्स्वरूपोऽवतिष्ठते ॥ ६९९ ॥
एवं ब्रह्मांडोदरेण करुणारसवार्धिना ।
श्रीकृष्णेनार्जुनायोक्तमित्येवं प्राह संजयः ॥ ७०० ॥
ततः पांडुकुमारोऽपि महानंदप्लुतोऽभवत् ।
चतुरः कृष्णसेवायामेकोऽसौ जगतीतले ॥ ७०१ ॥
कृष्णमूर्तिर्द्वयं तेन सम्यगालोचितं हृदि ।
तस्य लाभोऽभवद्विश्वरूपादधि चतुर्भुजे ॥ ७०२ ॥
परं पार्थविचारोऽयं श्रीकृष्णायाद्यचस्महि ।
न श्रेष्ठं व्यापकादसादेकदेश्यवलंबनम् ॥ ७०३ ॥

१ द्वयं विश्वरूपं चतुर्भुजं च. २ अधि=अधिकम्.

तदिदं विशदीकर्तुं शार्ङ्गी सदुपपत्तिभिः ।
समर्पकैश्च दृष्टांतैर्युक्त्या पार्थमबोधयत् ॥ ७०४ ॥
श्रुत्वा सुभद्राजानिस्तद्विचारमकरोद्धृदि ।
उभयोः कतरच्छ्रेष्ठं पृच्छाम्यग्रे मुहुः प्रभुम् ॥ ७०५ ॥
एवं विचार्य मनसि स्वेच्छापूरणहेतवे ।
स प्रक्ष्यति कथं पार्थः शृणुताग्रेऽथ तत्कथाम् ॥ ७०६ ॥
ओवीछंदेन सुलभां विनोदेन कथां ब्रुवे ।
निवृत्तिपादप्रसादाज्ज्ञानराजोऽब्रवीत्पुनः ॥ ७०७ ॥
आदाय स्वांजलौ भक्त्या पुष्पाण्योवीमयान्यलम् ।
चित्तस्थविश्वरूपांघ्र्योरर्पितानि तदाशये ॥ ७०८ ॥

इति श्रीज्ञानेश्वरविरचितायां भावार्थदीपिकायां अनंतनिरूपणे
एकादशोऽध्यायः ॥ ११ ॥

श्लोकाः ५५ नवश्लोकाः ७०८

# गीर्वाणज्ञानेश्वरी

## द्वादशोऽध्यायः

शुद्धे कृपे जयजय प्रसिद्धौदार्यरूपिणि ।
मातर्निरंतरानंदवर्षणं त्वं करोषि च ॥ १ ॥
विषयव्यालसंदष्टो मनुजो याति मूर्च्छनाम् ।
परं भवत्कृपादृष्ट्या निर्विषो भवति क्षणात् ॥ २ ॥
प्रसादरसकल्लोलैरायासि करुणे यदि ।
कस्त्वेन्द्रियतापेन दहेच्छोकानलेन कः ॥ ३ ॥
लभंते भवतो भक्ता मंगलं योगजं सुखम् ।
अहं ब्रह्मेति ब्रुवतां त्वं पूरयसि कांक्षितम् ॥ ४ ॥
भक्तानाधारशक्त्यंके वर्धयस्यतिकौतुकात् ।
हृदयाकाशपर्यंकेऽप्यांदोलयसि बालवत् ॥ ५ ॥
ज्योतिषाऽऽरार्तिकं कृत्वा मनःपवनखेलनम् ।
तथात्मसौख्यालंकारान्धारयस्यनिशं स्वयम् ॥ ६ ॥
दत्से जीवकलास्तन्यं हंस-सोऽहं प्रगायसि ।
समाधिसुखबोधेन स्वापयस्यनिशं च तान् ॥ ७ ॥
जननी साधकानां त्वं त्वत्तः सारस्वतोद्गमः ।
भवदीयामलच्छायां न त्यजामि गुरोः कृपे ॥ ८ ॥
हे सद्गुरुकृपादृष्टे त्वत्कारुण्यं य आश्रयेत् ।
विद्यासृष्टेः सोऽखिलाया धाता भवति केवलम् ॥ ९ ॥
तस्माच्छ्रीमति मातस्त्वं भक्तकल्पलते शिवे ।
आज्ञापय स्वदासं मां गीताग्रंथनिरूपणे ॥ १० ॥

---

१ आधारशक्तिर्योगसाधनप्रसिद्धा. २ अलग्ज्योतिःप्रकाशेन. ३ बालक्रीडासाधनानि. ४ अखिलविद्याप्राप्ति.

पूरयाब्धिं नवरसैर्भर रत्नाकरान्बहून् ।
भावार्थपर्वतानेवं वर्धयस्व समंततः ॥ ११ ॥
देशभाषामहीं खात्वा साहित्यस्वर्णयुक्खनिम् ।
उद्घाट्य रोपयानेका विवेकलतिकास्ततः ॥ १२ ॥
संवादफलनिधानानि प्रमेयोद्यानवंति च ।
संवर्धयाशु सर्वत्र गहनानि निरंतरम् ॥ १३ ॥
पाखंडकुहराण्यद्य वितंडान्मूलतः खन ।
कुतर्कप्राणिनो दुष्टान्सर्वथैव विनाशय ॥ १४ ॥
मां योजयावधानेन श्रीकृष्णगुणकीर्तने ।
श्रोतॄन्छ्रवणसाम्राज्ये स्थापयानिवधेहातः ॥ १५ ॥
मन्महाराष्ट्रनगरे ब्रह्मविद्यां समर्पय ।
दानादाने सुखस्यैव विश्वस्मिन्वर्धयाधुना ॥ १६ ॥
पल्लवं स्वकृपायास्त्वं प्रावारय ममोपरि ।
येनात्रोपस्कृतं मातः करिष्यामि यथासुखम् ॥ १७ ॥
एवमुक्ते सविनयं कृपया गुरुराह तम् ।
शीघ्रमारभ गीतार्थं मास्त्विदं बाह्यभाषणम् ॥ १८ ॥
महाप्रसादं गुर्वाज्ञां मत्वाऽथानंदतोऽब्रवीत् ।
गीतार्थमयं वक्ष्येऽद्य शृणुध्वं श्रोतृसत्तमाः ॥ १९ ॥

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

ततो विश्रांताधिराजः सोमवंशजयध्वजः ।
अब्रवीन्महदुत्साहात्पांडुपुत्रोऽर्जुनस्तदा ॥ २० ॥
कृष्णं प्राह त्वया यन्मां विश्वरूपं प्रदर्शितम् ।
तदद्भुतं समालोक्य तेन भीतोऽस्म्यहं हृदि ॥ २१ ॥

१ पादस्पर्शसंवादः.

नित्यं परिचितेयं ते मूर्तिरेव प्रिया मम ।
तथापि तां मा भजेति त्वयैवाहं निवारितः ॥ २२ ॥
व्यक्तं रूपं तथाऽव्यक्तं निर्भ्रांतमुभयं भवान् ।
व्यक्तं संप्राप्यते भक्त्या योगेनाऽव्यक्तमाप्यते ॥ २३ ॥
भवत्प्राप्त्यर्थमेवेदं देव मार्गद्वयं स्मृतम् ।
सगुणं निर्गुणं चेति यद्द्वाराभिनिवेश्यते ॥ २४ ॥
शतभारस्वर्णकयो वल्लमात्रे स एव हि ।
अतः स्वल्पे व्यापके च साम्यं योग्यतयोभयोः ॥ २५ ॥
यत्सुधापूर्णजलधेर्याऽमृतस्यास्ति योग्यता ।
तद्वच्चुलुकमात्रस्य प्रभाव उभयोः समः ॥ २६ ॥
विचारणायां मच्चित्ते प्रतीतिर्विद्यते खलु ।
तथापि त्वां योगपते पृच्छामि दृढताकृते ॥ २७ ॥
क्षणं यत्स्वीकृतं देव विश्वरूपं त्वया प्रभो ।
तत्किं सत्येव लीला वा ज्ञातुमिच्छामि तत्त्वतः ॥ २८ ॥
तथैव येषां त्वं कर्म त्वमेवासि परं तथा ।
भवदर्थं मनोधर्मा विक्रीताः सर्वथैव यैः ॥ २९ ॥
एवंविधैर्भवद्भक्तैर्यैव मूर्तिर्निरंतरम् ।
अंतर्विचिंत्य भावेन श्रीहरे पर्युपासिता ॥ ३० ॥
यदोंकारात्परतरं स्तोतुं वाग्यत्र कुंठिता ।
न लभ्यते यत्तुलायां त्रैलोक्ये वस्तु किंचन ॥ ३१ ॥
यच्चास्त्यक्षय्यमव्यक्तं स्थाननामादिवर्जितम् ।
भजंति यज्ज्ञानिनोऽपि सोऽहंभावेन सर्वदा ॥ ३२ ॥
एवं भक्ता ज्ञानिनश्च को यथार्थस्तयोभयोः ।
योगी चाप्यथ भक्तो वा ब्रूह्यनंत ममाग्रतः ॥ ३३ ॥
एवं पार्थवचः श्रुत्वा कृष्णोऽत्यंतमतूतुषत् ।
उवाच मार्मिकं प्रश्नं प्रष्टुं सुज्ञोऽसि पांडव ॥ ३४ ॥

---

१ स्वर्णपरीक्षणशिलायां निर्णीतं स्वरूपम्.

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

अस्ताचलोपत्यकायां पश्चाद्याते रवौ क्षणात् ।
तमेवानुसरंतिस्म किरणास्तत्प्रभापि च ॥ ३५ ॥
किंवा वर्षासु सरितो वृद्धिमायांति सर्वतः ।
पार्थ मां भजतां तद्वच्छ्रद्धा वृद्धिं प्रयाति हि ॥ ३६ ॥
किंवा प्रविष्टा गंगाऽब्धौ पुनश्चापि विवर्धते ।
जलपूरः प्रवहति तद्वत्प्रेमास्ति यस्य हि ॥ ३७ ॥
न जानंति दिवारात्रिं कायवाङ्मानसैः सह ।
मयि चित्तं समावेश्य भजंत्यर्जुन मां प्रति ॥ ३८ ॥
एवं ये सर्वथा भक्ताः स्वात्मानं ह्यर्पयंति माम् ।
योगयुक्तांश्च तानेव श्रेष्ठान्मन्ये सदाऽर्जुन ॥ ३९ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

ये ज्ञानयोगिनो ब्रह्म निराकारं स्वतश्च ते ।
सोऽहंभावेन संयुक्ताश्चोपासंते सदाऽक्षरम् ॥ ४० ॥
यं चिंतितुं मनोऽशक्तमगम्यं चापि धर्द्धियः ।
तत्कथं गोचरं भूयादिंद्रियाणां जडात्मनाम् ॥ ४१ ॥
ध्यानायात्यंतगूढं यदेकस्थाने न लभ्यते ।
कस्यापि वस्तुनो यस्मिन्नाकारो नैव विद्यते ॥ ४२ ॥
यच्च सर्वत्र संपूर्णं विद्यमानं निरंतरम् ।
यस्य प्राप्तौ चिंतनादि स्वभावादेव लुप्यते ॥ ४३ ॥
न जातं नोत्पत्स्यते यन्नास्त्यस्तीति द्विधोदितम् ।
अतस्तत्प्राप्तिविषये नोपायोऽस्ति कुतश्चन ॥ ४४ ॥
न चलं नाऽचलं यच्च समाप्तं मलिनं न च ।
स्वीयशक्तिबलेनैव स्वस्वाधीनं च यैः कृतम् ॥ ४५ ॥

संनियम्येंद्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥ ४ ॥

यूथानि विषयाणां यैर्वैराग्याग्नौ हुतानि च ।
उच्छृंखलानींद्रियाणि स्वधैर्येणावृतान्यपि ॥ ४६ ॥
यमादियोगसिद्ध्यर्थं विषयाश्चेंद्रियाणि च ।
समाकृष्टानि हृदयकपाटे स्वस्य संततम् ॥ ४७ ॥
रुद्ध्वाऽपानकपाटं यैर्बध्वा चासनमुद्रिकाम् ।
मूलबंधस्यापि दुर्गमुच्छ्रितं पार्थ सर्वशः ॥ ४८ ॥
आशापाशाश्च यैश्छिन्ना भिन्ना धैर्यकटास्तथा ।
निद्रारूपाणि ध्वांतानि विध्वस्तानि प्रयत्नतः ॥ ४९ ॥
एवं वज्राग्निज्वालाभिः सप्तधातून्विदाह्य च ।
शतघ्नीभिः पूजितानि व्याधिशीर्षाणि यैस्तथा ॥ ५० ॥
ततः कुंडलिनीस्तंभमाधारे चोच्छ्रयंति ये ।
मस्तकांतं तत्प्रभया गच्छंत्यूर्ध्वं प्रयत्नतः ॥ ५१ ॥
नवद्वारकवाटानि रुद्ध्वा संयमदंडतः ।
सुषुम्णायाश्च पंथानं मुक्तं कुर्वंत्यहर्निशम् ॥ ५२ ॥
स्वमाणशक्तिचामुंडा संकल्पाऽजासृजा तथा ।
मनोमहिषमुंडादियलिभिस्तर्पयंति च ॥ ५३ ॥
इडापिंगलयोरैक्यात्कुर्वंत्यनुहतध्वनिम् ।
तत्क्षणं जीवनकलासरः प्राप्स्यंति योगिनः ॥ ५४ ॥
सुषुम्णामध्यविवरे यास्ति सोपानपद्धतिः ।
तामारुह्य ब्रह्मरंध्रं मूर्धस्थं यांति पांडव ॥ ५५ ॥
मकाररूपं सोपानमारुह्य गहनं ततः ।
हृदाकाशं समाक्रम्य ब्रह्मरंध्रं प्रयांति ते ॥ ५६ ॥
एवं च ते समधियः सोहंसिद्ध्यर्थमुत्सुकाः ।
योगमार्गं साधुवंति बहुलायासमंतरा ॥ ५७ ॥

---

१ वज्राग्निर्मूलबंधाग्नि - २ आधारे तन्नामकचक्रे.

एवं हस्तस्थितमिवाप्नुवंति ब्रह्म निर्गुणम् ।
योगेन यतमानाश्च सुखेनैवाप्नुवंति माम् ॥ ५८ ॥
प्राप्तयोगबलेनापि मत्प्राप्तेरन्यदिष्यते ।
न लभ्यते किंचिदपि क्लेशो भवति केवलम् ॥ ५९ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

मूर्तं हितं प्राणिनां यद्यदव्यक्तमनाश्रितम् ।
मुक्तिं विनेदृशं ब्रह्म प्राप्तुमिच्छंति ये भुवि ॥ ६० ॥
तान्महेंद्रपदादीनि मोहयंत्यनिशं पथि ।
ऋद्धिसिद्ध्यादिद्वंद्वानि व्यामोहं जनयंति च ॥ ६१ ॥
कामक्रोधविकारांश्च प्राप्नुवंत्यनिवारिताः ।
शरीरं ब्रह्मणा साकं योधनीयं भवत्यपि ॥ ६२ ॥
निघ्नंति तृपया तृष्णां भक्षयंति क्षुधा क्षुधम् ।
मीयन्ते हि तथा वायुं व्यामेनैव दिवानिशम् ॥ ६३ ॥
दिवाऽऽतपे च शयनमिंद्रियाणां च निग्रहः ।
मित्रभावं समाश्रित्य वृक्षैः संभाषणं तथा ॥ ६४ ॥
ये प्रावृण्वंति सूर्यौष्ण्यं शीतं संवेष्टयंति च ।
पर्जन्यधारासारेऽपि निवसंति निरंतरम् ॥ ६५ ॥
पतिं विनाऽऽग्निप्रवेशकरणं दुष्करं यथा ।
तथैवैनं विद्धि पार्थ योगाभ्यासं सुदुष्करम् ॥ ६६ ॥
पत्यर्थं न प्रवेशोऽयं न कुलाचारतस्तथा ।
किंत्विदं मृत्युना सार्धं युद्धं नव्यप्रकारतः ॥ ६७ ॥
मृत्युतोऽपि च यत्तीक्ष्णं तसक्ष्वेडाशनं यथा ।
किमाननं न स्फुटति ग्रावपर्वतभक्षणे ॥ ६८ ॥
अतो योगेन ये ब्रह्मप्राप्तिमिच्छंति साधितुम् ।
तेषां दैवे निश्चयेन दुःखभोगोऽस्ति केवलम् ॥ ६९ ॥

१ व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगंतरम्.

दंतभग्नेन लोहानां चणकानां हि भक्षणे ।
किं तेनोदरपूर्तिः स्यान्मरणं वा निमंत्रितम् ॥ ७० ॥
अथवा सागरस्तर्तुं बाहुभ्यां किं क्षमो भवेत् ।
किंवाऽकाशे निरालंबे पङ्ग्वा गंतुं क्षमं क्वचित् ॥ ७१ ॥
युद्धांगनमसंप्राप्य प्रहारानविपह्य च ।
कथं स्यात्सूर्यलोकस्य प्राप्तिः पांडव दुर्लभा ॥ ७२ ॥
अथवा वायुना स्पर्धां खंजः कर्तुं कथं क्षमः ।
देहाभिमानिनां तद्वद्ब्रह्मप्राप्तिः सुदुर्लभा ॥ ७३ ॥
धैर्यं धृत्वातःपरं ये स्पर्धंते वियतः समम् ।
ते निश्चयेन जानीहि मनुजाः क्लेशभागिनः ॥ ७४ ॥
सगुणोपासका ये च भक्तिमार्गावलंबिनः ।
तेभ्यः कष्टा असंख्याता भवंत्यर्जुन सर्वदा ॥ ७५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायंत उपासते ॥ ६ ॥

स्ववर्णाश्रमधर्मेण सदा कर्मेन्द्रियैः स्वकैः ।
आचरंति स्वकर्माणि नित्यान्यादरपूर्वकम् ॥ ७६ ॥
कर्तव्यानि समादृत्य निषिद्धानि त्यजंति च ।
तथा फलानि मय्यर्प्य भर्जयित्वा त्यजंति च ॥ ७७ ॥
एवं कृतानि कर्माणि सदा कृत्वाऽर्पयंति माम् ।
तैः कृतान्यपि कर्माणि न कृतानि भवंति हि ॥ ७८ ॥
कायेन वाचा मनसा ये ये भावा भवंति च ।
न तेषां मदृतेऽन्यत्र क्वापि प्रवणता भवेत् ॥ ७९ ॥
एवं विलीय मद्रूपे कुर्वते मम चिंतनम् ।
तदंतःकरणे ध्यानान्मदीयं भवनं सदा ॥ ८० ॥
व्यवहारं मया प्रेम्णा कृत्वा कृत्स्नं निरंतरम् ।
भोगमोक्षादिकाः कांक्षाः परित्यक्ताश्च यैः सदा ॥ ८१ ॥
यैः स्वदेहमनःप्राणाः सर्वथैव मदर्पिताः ।
तेषामखिलकर्तव्यं सर्वदैव करोम्यहम् ॥ ८२ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

किं वा वच्म्यधिकं पार्थ मात्रा यः स्वोदरे धृतः ।
किं वाच्यं तत्सुहृत्त्वस्य वात्सल्यस्य च वैभवम् ॥ ८३ ॥
कीदृशाः संतु मद्भक्तास्तच्छत्रूणां निवारणे ।
तत्परोऽस्मि दिवारात्रं बद्धः परिकरो मया ॥ ८४ ॥
तेषां सांसारिकी चिंता न कदापि समुद्भवेत् ।
किं श्रीमतो गृहस्थस्य कांता भिक्षार्थमाव्रजेत् ॥ ८५ ॥
तथैव संति ये भक्ताः परिवारा ममैव ते ।
तेषां क्लेशापहरणे लज्जा मामेव सा भवेत् ॥ ८६ ॥
जन्ममृत्यब्धिकल्लोलैः सृष्टिर्बुडति सर्वदा ।
तद्दालोक्यैव मच्चित्ते संतापो जायतेऽर्जुन ॥ ८७ ॥
भवाब्धिवृद्धिजा भीतिर्न भीषयति कातरान् ।
भक्ता अपि च तां दृष्ट्वा प्राप्नुवंति सदा भयम् ॥ ८८ ॥
तदर्थं रामकृष्णादीनवतारान्विधृत्य च ।
व्रजामि तत्तन्नामेषु सावधानो युगे युगे ॥ ८९ ॥
मन्नामनौका निर्माय सुदृढाश्च सहस्रशः ।
संसारसागरे शश्वत्तेषां संतारकोऽस्म्यहम् ॥ ९० ॥
उपाधिरहिता भक्ता ध्यानमार्गे नियोजिताः ।
परिवारा नामरूपनौकायां स्थापिताः परम् ॥ ९१ ॥
तथा केषांचिदुदरे संबध्य प्रेमपेटिकाम् ।
मुक्तिरूपतटाके तानानीय स्थापयाम्यहम् ॥ ९२ ॥
तथा येन्चन ये भक्ताः पशुजातिसमुद्भवाः ।
तेऽपि गंतुं विष्णुलोकं पात्रीभूताः कृता मया ॥ ९३ ॥
तथैव मम भक्तानां चिंतालेशो न विद्यते ।
तेषां संरक्षणायास्ति बद्धः परिकरो मया ॥ ९४ ॥
ये स्वात्मनश्चित्तवृत्तिं मयि भक्त्यार्पयंति हि ।
त एव मां शुंठयंति स्वीयप्रेम्णि निरंतरम् ॥ ९५ ॥

अतो ब्रवीमि त्वां पार्थ भक्तिमार्गं त्वमिच्छसि ।
अयमेव तदा मंत्रो मनो मयि निधापयेत् ॥ ९६ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

पार्थ पूर्वं मनोऽस्वंतं बुद्धिनिश्चयसंयुतम् ।
स्थिरं कृत्वा मत्स्वरूपे स्थापय त्वमनारतम् ॥ ९७ ॥
मानसं चैव बुद्धिश्च प्रेम्णा मय्यर्पयिष्यसि ।
विनायासं तदा मह्यं प्राप्स्यसे त्वं धनुर्धर ॥ ९८ ॥
चेन्मनोबुद्धिरुभयं स्वभावेनार्पितं मयि ।
तदाऽहंत्वंभावनापि कचिन्नोवैरिता भवेत् ॥ ९९ ॥
यथा निर्वातिते दीपे प्रकाशो लुप्यति क्षणात् ।
सूर्ये याति यथा चास्तं तेजो गच्छति तत्समम् ॥ १०० ॥
प्राणप्रयाणसमये प्रस्थास्यंतींद्रियाण्यपि ।
गतिर्यत्र मनोबुद्ध्योरहंकारोऽनुगच्छति ॥ १०१ ॥
तस्मात्स्वयं मनोबुद्धी मत्स्वरूपे निवेशय ।
तेनाऽहं व्यापको यावांस्तावान्भवसि पांडव ॥ १०२ ॥
उक्ते मद्वचने पार्थ नाऽसत्यं विद्यते क्वचित् ।
यतच्छपथपूर्वं त्वां कथयामि पुनः पुनः ॥ १०३ ॥

अथ चित्तं समाधातुं न शक्नोपि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

मनोबुद्ध्योः समं चित्तं मयि चेत्पूर्णमर्जुन ।
यत्नेनापि स्थापयितुमसमर्थो भवान्यदि ॥ १०४ ॥
तदाऽष्टप्रहरेष्वेकक्षणं स्वस्यतया मयि ।
सर्वतोऽपि मनो युंक्ष्व पार्थ सर्वाश्रयाश्रये ॥ १०५ ॥
यावत्कालं त्वन्मनसोऽर्जुन संगो भवेन्मम ।
तावत्स्वयं विलुप्ताः स्युः सकला विषयैषणाः ॥ १०६ ॥
यथा शरदि संप्राप्ते नद्यः स्युर्न्यूनजीवनाः ।
तथा मत्संगमाच्चित्तं संसाराद्विरमिष्यति ॥ १०७ ॥

किंवा शशी पूर्णिमातोऽहर्दिवं क्षीणतां व्रजेत् ।
स चामायां सर्वथैव नामशेषो भवत्यपि ॥ १०८ ॥
विषयेभ्यस्तथा चित्तं परावृत्तं क्रमाद्भवेत् ।
निश्चयेन तदा पार्थ मत्स्वरूपं भवेत्क्षणात् ॥ १०९ ॥
यं शंसंत्यभ्यासयोगं सोऽयमेव सुनिश्चितः ।
अनेनाप्यनवाप्यं च वस्तु लोके न विद्यते ॥ ११० ॥
केषांचिदभ्यासबलादंतरिक्षे गतिर्भवेत् ।
व्याघ्रसिंहादिभिः केऽपि स्नेहमापादयंति च ॥ १११ ॥
ते विषं पाचयंति स्म कुर्वत्यब्धौ च पद्धतिम्[1] ।
वेदानपि जयंत्येके केवलाभ्यासयोगतः ॥ ११२ ॥
तस्मान्निरंतराभ्यासे किंचिन्नास्ति सुदुष्करम् ।
अतोऽभ्यासबलेनैव मामागच्छ त्वमर्जुन ॥ ११३ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥

यद्यभ्यासेऽपि सामर्थ्यं पर्याप्तं नास्ति चेत्तव ।
तदा त्वं वर्तसे यद्वत्तद्वदेवाऽऽचरन्वस ॥ ११४ ॥
नैवेंद्रियाणि रुध्यस्व विषयानपि न त्यज ।
ज्ञातीनामभिमानं च न त्यजार्जुन सर्वथा ॥ ११५ ॥
पालयस्व कुलाचाराविधिनिषिद्धांस्त्यज यत्नतः ।
मुक्तत्वेन निजानिष्टान्व्यवहारान्कुरुष्व भोः ॥ ११६ ॥
कायेन वाचा मनसा स्वेष्टान्संपादय स्वतः ।
परं कर्तृत्वाभिमानं पार्थ मा कुरु सर्वथा ॥ ११७ ॥
सर्वं स एव संवेत्ति कार्यं चाकार्यमेव च ।
जगत्सर्वं चालयति यः परात्मा स्वयंजनिः ॥ ११८ ॥
न्यूनाधिकं भवेद्यच्च न विचारय तद्वृथा ।
एवं जीवितसाफल्यमात्मनः कुरु पांडव ॥ ११९ ॥

१ पद्धतिं=मार्गम्.

मालाकारो नयेद्यत्र पानीयं तत्र गच्छति ।
एवं सरलया वृत्त्या त्वया स्थेयं दिवानिशम् ॥ १२० ॥
ततः कृतस्याऽकृतस्य भारमात्मनि नोद्वह ।
तेन नित्यं चित्तवृत्तिर्मत्स्वरूपे रता भवेत् ॥ १२१ ॥
यथा ऋजुर्वा वक्रो वा विचारयति नो रथः ।
यंता यत्र नयेत्तत्र याति वीरशिरोमणे ॥ १२२ ॥
तथा यद्यद्भवेत्कर्म तत्स्वल्पं वाऽधिकं स्वयम् ।
नोक्त्वा समर्पयेत्सर्वं मयि भावेन सर्वदा ॥ १२३ ॥
सर्वेत्र भावनामेवं यद्यर्जुन करिष्यसि ।
तर्हि त्वं यासि मृत्यूर्ध्वं मोक्षधाम ममालयम् ॥ १२४ ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

यद्येतदप्यशक्यं ते मयि कर्मार्पणं स्वतः ।
तर्हि यत्कथयिष्येऽहं तत्त्वं मनसि धारय ॥ १२५ ॥
मत्स्मृतिस्तेऽस्तु सततमाद्यंते च कर्मणाम् ।
तदशक्यं यदि भवेद्बुद्धेस्तव तदाऽर्जुन ॥ १२६ ॥
तर्हि तन्मास्तु किं तेन मद्भ्यासोऽपि च मास्तु ते ।
परं रक्ष सदा पार्थ बुद्धिमिंद्रियनिग्रहे ॥ १२७ ॥
यस्मिन्यस्मिन्पार्थ काले कर्माणि प्रभवंति च ।
तेषामपि तिलमात्रां न कुर्याः फलवासनाम् ॥ १२८ ॥
यथा वृक्षा लता वापि स्वफलानि न भुंजते ।
तथा स्वकर्मजन्यानि त्याज्यान्येव फलानि हि ॥ १२९ ॥
तथैव मां स्मरेच्चित्ते कुर्याद्वा तानि मत्कृते ।
फलार्थे स्यादुदासीनः कुर्मण्यपि च कर्मसु ॥ १३० ॥
यद्वदश्मनि पर्जन्यो वर्षा वा बीजवापनम् ।
सम्मलभ्यद्वयिणयत्कर्म सन्दग्म निष्फलम् ॥ १३१ ॥
यथा पितास्ति कन्यायामभिलाषविवर्जितः ।
तथा निरभिलाषः सन्कुर्याः कर्माणि सर्वदा ॥ १३२ ॥

वह्निज्वाला यथा पार्थ यात्यूर्ध्वं गगने वृथा ।
तथा कर्मफलानां ते व्यर्था भवतु वासना ॥ १३३ ॥
पार्थ निष्कामकर्मेदं भायात्साधारणं तव ।
तथाप्यखिलयोगेभ्यः प्रधानोऽयं प्रकीर्तितः ॥ १३४ ॥
एवं कर्मफलत्यागो ह्यपुनर्जन्मकारणम् ।
प्रवृद्धा वेणवो यद्वद्वंध्यास्तिष्ठंति चोच्छ्रिताः ॥ १३५ ॥
तथाऽनेन शरीरेण मुक्तः स्यान्न पुनर्जनिः ।
सर्वथैव विनष्टा स्याज्जन्ममृत्य्वादियातना ॥ १३६ ॥
अतः कुर्याद्दृढाभ्यासं तेन ज्ञानार्जनं भवेत् ।
ज्ञानप्राप्त्या दर्शनं स्याद्ध्यानस्यार्जुन तत्त्वतः ॥ १३७ ॥
स्वन्मनोवृत्तयो ध्यानमालिंगंति तदा पुनः ।
कर्मप्रवृत्तिरखिला सहजं नाशमृच्छति ॥ १३८ ॥
कर्मणां दूरगमने फलत्यागः करे स्थितः ।
फलत्यागोत्तरं शांतिः परिपूर्णा भवेत्सुखम् ॥ १३९ ॥
मार्गः सुभद्राकांताऽयं शांतिलाभाय निश्चितः ।
अतस्त्वां कथयाम्यस्याभ्यासं कुरु निरंतरम् ॥ १४० ॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छंतिरनंतरम् ॥ १२ ॥**

अभ्यासाद्दुष्करं पार्थ ज्ञानं सदसदात्मकम् ।
तज्ज्ञानापेक्षया ध्यानं दुःसाध्यमधिकं तथा ॥ १४१ ॥
ततः कर्मफलत्यागः स ध्यानाच्छ्रेष्ठ उच्यते ।
त्यागादप्यधिकं ज्ञेयं शांतिसौख्यं तु योगिनाम् ॥ १४२ ॥
एवं मार्गमतिक्रम्य किरीटिंस्तदनंतरम् ।
ततः शनैः शांतिसौख्यं प्राप्नोपि ब्रह्म शाश्वतम् ॥ १४३ ॥

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**

ततो न स्याद्भूतमात्रे द्वेषो यद्वदयांतरे ।
यात्मनो विद्यते नैवाऽर्जुन स्वपरभावना ॥ १४४ ॥

उत्तमस्यादरः कार्य उपेक्षेवाऽधमं तथा ।
इत्यादिकं न जानाति साम्येन वसुधा यथा ॥ १४५ ॥
राजदेहे नियस्तव्यं रंकात्स्येयं च दूरतः ।
इत्येवं भेदभावश्च नात्मनोऽस्ति कृपावतः ॥ १४६ ॥
किंवा रूपं हरेयं गोर्व्याघ्रं हन्यां विपात्मना ।
इत्येवमुदकं नैव जानात्यर्जुन सर्वथा ॥ १४७ ॥
एवं च सर्वभूतेषु प्रेमैक्यं ह्यस्ति यद्धृदि ।
कृपाया आश्रयीभूतो यो भवेत्स्वयमेव हि ॥ १४८ ॥
कल्पना चाहंममेति यन्मनो न स्पृशत्यपि ।
तथाऽर्जुन सुखं दुःखं यं न स्पृशति कर्हिचित् ॥ १४९ ॥
पार्थ यस्य क्षमायां च धरण्यास्तुल्ययोग्यता ।
तेन सांके कृतं शाश्वत्संतोषस्थानमात्मनः ॥ १५० ॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

विना पर्यतुमुदधिः संततं जलपूरितः ।
उपचारैर्विना यश्च संतोषभरितः सदा ॥ १५१ ॥
स्वप्राणशपथं कृत्वाऽऽवृणोति स्वं मनश्च यः ।
निश्चयः सत्यतां याति यन्निश्चयबलेन हि ॥ १५२ ॥
यद्धृदंतर्जीवशिवौ प्रेमभावेन सर्वदा ।
एकासनसमारूढौ शोभेतेऽहर्दिवं मुदा ॥ १५३ ॥
योगवैभवसंपूर्णो यो बुद्धिमनसी सदा ।
मयि निःसीमभावेन समर्पयति भक्तितः ॥ १५४ ॥
अंतर्बहिर्यथासांगं स योगो येन साधितः ।
तथापि यस्य च प्रेमाऽनुरागो विद्यते मयि ॥ १५५ ॥
स एव पार्थ सद्भक्तः स योगी मुक्त एव च ।
स वल्लभाऽहं तस्यांत इत्येवं प्रेम तस्य मे ॥ १५६ ॥
नैतावत्केवलं प्रेम प्राणादप्यधिकोऽस्ति सः ।
तथापि रूपकमिदमपूर्णं विद्धि सर्वथा ॥ १५७ ॥

मोहपूर्णा प्रेमवार्ता मनोव्यामोहकारिणी ।
अवाच्येयं परं प्रेम वाचालयति मां ततः ॥ १५८ ॥
तदेतदर्थमस्माभिरुक्तं ह्युपमया सह ।
वास्तवे तु प्रेमकथा नैव वर्णयितुं क्षमाः ॥ १५९ ॥
पार्थास्तां खल्विदं सर्वं, वार्ताः कथयतो मम ।
प्रियाणामंतरे प्रेमाऽवृधद्द्वैगुण्यतोऽधिकम् ॥ १६० ॥
तत्र दैवात्प्रेमभक्तलाभाह्लादश्च यस्तयोः ।
किं वाच्यं तस्य माधुर्यं नोपमास्ति जगत्त्रये ॥ १६१ ॥
तस्माद्धि पांडुतनय प्रियः श्रोता त्वमेव च ।
अतः प्रिया भक्तवार्ताः कथितास्त्वत्पुरो मया ॥ १६२ ॥
पार्थातो वर्णयाम्यद्य योगोऽयं तु सुखास्पदः ।
एवमुक्त्वा तदाऽनंतः सुखेनांदोलितोऽभवत् ॥ १६३ ॥
स आहार्जुन रक्षामि यानहं चित्तमंदिरे ।
तल्लक्षणानि वच्मि त्वां भक्तानामवधारय ॥ १६४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

पार्थ सिंधोर्जले क्षुब्धे नहि बिभ्यंति तद्गताः ।
प्राणिनः, सिंधुरपि तान्प्राणिनो नह्युपेक्षते ॥ १६५ ॥
दृष्ट्वापि जगदुन्मत्तं न क्षुभ्नाति च यन्मनः ।
लोका अपि च न त्रस्ताः सहवासेन वारिधेः ॥ १६६ ॥
बहुना किं यच्छरीरं त्रस्यत्यवयवैर्न च ।
जीवान्सर्वानेकरूपान्ज्ञात्वा नोपेक्षते च तान् ॥ १६७ ॥
आत्मरूपं जगज्जातं प्रियाप्रियमतो गतम् ।
लुप्ता हर्षविषादाश्च द्वैतभावविनाशतः ॥ १६८ ॥
मुक्तः स सुखदुःखेभ्यो भयोद्वेगादिवर्जितः ।
ततो रतश्च मद्भक्तौ क्रमेणानंदसंप्लुतः ॥ १६९ ॥
मदं मोहो भवेत्तस्य तत्प्रेम किमु वर्ण्यते ।
बहुना किं, स मे जीवः सर्वस्वं नास्त्यतः परम् ॥ १७० ॥

य आत्मानंदसंतृप्तो मोक्षार्थं यस्य जन्म च ।
स पूर्णताश्रियः साक्षाद्भर्तेति ज्ञेयमन्वहम् ॥ १७१ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

न विद्यते पार्थ यस्मिन्किंचित्सूक्ष्मापि वासना ।
यदस्तित्वं चात्मसुखं वर्धयत्यनिशं क्रमात् ॥ १७२ ॥
काशीक्षेत्रं मोक्षदानक्षमं यद्यपि विद्यते ।
तथापि तत्र मरणे मोक्षो भवति नान्यथा ॥ १७३ ॥
हिमाद्रिर्दोषहंतापि तत्र शीतभयं महत् ।
सज्जनानां शुचित्वस्य नास्त्यपायः कुतश्चन ॥ १७४ ॥
अस्ति गंगांभः पवित्रं पापतापनिवारकम् ।
तत्र भीर्विद्यतेऽन्यैव तस्यां जीवा ब्रुडंत्यपि ॥ १७५ ॥
भक्तिनद्यस्ति गंभीरा परं तन्मार्गगामिनः ।
न म्रियंते किंतु मोक्षं निश्चयेन व्रजंति ते ॥ १७६ ॥
साधूनां संगमाद्गंगा जगत्पापाद्विमोचयेत् ।
तत्संगमस्य पावित्र्यं वर्णनीयं किमर्जुन ॥ १७७ ॥
एवंभूतस्तु यो भक्तः शौचाद्तीर्थाश्रयो भवेत् ।
मनोमलान्समस्तान्यो द्रापयेच्च दिशो दश ॥ १७८ ॥
सोऽन्तर्यलौऽतर्बहिर्यश्च सूर्यवन्निर्मलः सदा ।
निधिं पश्येद्यथा पद्मस्तथा ब्रह्म स पश्यति ॥ १७९ ॥
व्यापकः सद्गुदासी यो नित्यमाकाशवत्स्थितः ।
यन्मनो व्यापकमपि निर्लेपमवतिष्ठते ॥ १८० ॥
तस्य सांसारिकं नष्टमागता निरपेक्षता ।
व्याधहस्ताच्युतः पक्षी यथा गच्छति निर्भयः ॥ १८१ ॥
तथा सुखी स सततं कंचित्तुच्छं न पश्यति ।
यथा मृतो न जानाति लज्जा देहस्य कुत्रचित् ॥ १८२ ॥

१ पद्म = जन्मकाले मातुरुदरात्तत्रां नि सृतः.

कृतानां कर्मणां यस्य नाभिमानः कुतश्चन ।
यथा काष्ठं विना वह्निः सहजं नश्यति क्षणात् ॥ १८३ ॥
तथैव प्राप्यते शांतिरंते मोक्षं लभेदपि ।
दैवादिमानि प्राप्यंते विरक्तस्यापि जन्मिनः ॥ १८४ ॥
अस्तु, पार्थाऽतरे यस्य जागर्ति ब्रह्मभावना ।
स द्वैतस्यापरे तीरे प्राप्तोऽनायासतः क्षणात् ॥ १८५ ॥
सेव्यश्च सेवकश्चैव स्वयमेवेति वेत्ति यः ।
परं भक्तिसुखस्यार्थे सेवकत्वं समाश्रितः ॥ १८६ ॥
स्वस्मादन्यां च यो व्यक्तिं दृष्ट्वा भजति देववत् ।
रीतिं भक्तान्दर्शयति भजनस्य स योगवान् ॥ १८७ ॥
तस्यैव व्यसनं मह्यमखंडं तस्य चिंतनम् ।
किं बहूक्त्या समाधानं भासते तस्य दर्शनात् ॥ १८८ ॥
तदर्थमवतारो मे भूम्यां वासश्च तत्कृते ।
नीराजयामि तं शश्वत्पंचप्राणैः प्रियोत्तमम् ॥ १८९ ॥

**यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७**

यो ब्रह्मप्राप्तिसदृशीं लब्धिमन्यां न मन्यते ।
अतोऽन्यभोगयोगेन महतापि न तुष्यति ॥ १९० ॥
यः स्वयं विश्वरूपोऽभूद्यतो द्वैतमनीनशत् ।
ततश्च सहजं द्वेषो गतस्तस्य नरस्य च ॥ १९१ ॥
यद्यत्स्वकीयं वस्त्वस्ति तत्कल्पे[1]ऽपि न नश्यति ।
इदि पूर्णमिदं ज्ञात्वा न शोचति कदाचन ॥ १९२ ॥
यत्परं न ध्येयमस्ति स्वांसिस्तद्ब्रह्म तिष्ठति ।
इति मत्वा जगत्यन्यत्किंचिन्नेच्छति चेतसा ॥ १९३ ॥
इदं सेष्टमिदं दुष्टमिति भावो न यद्धृदि ।
यथा न सूर्यसंविधे दिनराज्यादिकल्पना ॥ १९४ ॥

---

१ कल्पे=जगत्प्रलयावसरे ।

एवं यः केवलं ज्ञानी सततं भजने रतः ।
रममाणः सर्वकालं मत्स्वरूपे सनातने ॥ १९५ ॥
अतो मां भक्तिसदृशं नान्यदस्ति प्रियं क्वचित् ।
इदं सशपथं प्रेम्णा कथयामि तवार्जुन ॥ १९६ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥

पार्थैवं यस्य हृदये वैषम्यं नैव विद्यते ।
समः शत्रौ च मित्रे यो वर्तते प्रेमभावतः ॥ १९७ ॥
स्वगृहस्थान्प्रकाशेय ध्वांते संस्थापये परान् ।
एवं भेदं न जानाति यथा दीपो धनंजय ॥ १९८ ॥
य आत्मानं रोपयति यः शस्त्रेण च्छिनत्ति च ।
उभयोः सदृशीं छायां यथा वृक्षः प्रयच्छति ॥ १९९ ॥
अथवेक्षुः सुमधुरः पालयंतं भवेत्सदा ।
यंत्रेण पीडयंतं तु तिक्तो भवति वा कटुः ॥ २०० ॥
शत्रुं मित्रं वा समानं मत्वा तमनुवर्तते ।
तथा मानापमानादि द्वंद्वं पश्यति यः समम् ॥ २०१ ॥
शीतोष्णवर्षाकालेषु न विपर्यति खं यथा ।
प्राप्ते शीतोष्णभावेऽपि समं तिष्ठति यस्तथा ॥ २०२ ॥
दक्षिणो वोत्तरो वापि वायुर्मेरोर्यथा समः ।
तथा सुखे वा दुःखे वा यः समत्वेन वर्तते ॥ २०३ ॥
राजानं वा दरिद्रं वा चंद्रिका तुल्यसौख्यदा ।
यथा तथा जीवमात्रे यस्तुल्यं प्रेम रक्षति ॥ २०४ ॥
यद्वज्जलं जीवनीयं विद्यते जगतः समम् ।
त्रयो लोका अपि च यत्साम्येनोपासतेऽन्वहम् ॥ २०५ ॥
त्यक्त्वांऽतर्वाह्यसंबंधं मुक्त्वा विषयवासनाम् ।
एकांतवासमाश्रित्य यस्तिष्ठति सदाऽचलः ॥ २०६ ॥

तुल्यनिंदास्तुतिर्मौनी संतुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

कृतानां कर्मणां यस्य नाभिमानः कुतश्चन ।
यथा काष्ठं विना वह्निः सहजं नश्यति क्षणात् ॥ १८३ ॥
तथैव प्राप्यते शांतिरंते मोक्षं लभेदपि ।
दैवादिमानि प्राप्यंते विरक्तस्यापि जन्मिनः ॥ १८४ ॥
अस्तु, पार्थाऽतरे यस्य जागर्ति ब्रह्मभावना ।
स द्वैतस्यापरे तीरे प्राप्तोऽनायासतः क्षणात् ॥ १८५ ॥
सेव्यश्च सेवकश्चैव स्वयमेवेति वेत्ति यः ।
परं भक्तिसुखस्यार्थे सेवकत्वं समाश्रितः ॥ १८६ ॥
स्वस्मादन्यां च यो व्यक्तिं दृष्ट्वा भजति देववत् ।
रीतिं भक्तान्दर्शयति भजनस्य स योगवान् ॥ १८७ ॥
तस्यैव व्यसनं मह्यमखंडं तस्य चिंतनम् ।
किं बहुत्तया समाधानं भासते तस्य दर्शनात् ॥ १८८ ॥
तदर्थमवतारो मे भूम्यां वासश्च तत्कृते ।
नीराजयामि तं शश्वत्पंचप्राणैः प्रियोत्तमम् ॥ १८९ ॥

**यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ।**

यो ब्रह्मप्राप्तिसदृशीं लब्धिमन्यां न मन्यते ।
अतोऽन्यभोगयोगेन महतापि न तुष्यति ॥ १९० ॥
यः स्वयं विश्वरूपोऽभूद्गतो द्वैतमनीनशत् ।
ततश्च सहजं द्वेषो गतस्तस्य नरस्य च ॥ १९१ ॥
यद्यत्स्वकीयं वस्त्वस्ति तत्कल्पे[1]ऽपि न नश्यति ।
हृदि पूर्णमिदं ज्ञात्वा न शोचति कदाचन ॥ १९२ ॥
यत्परं न ध्येयमस्ति स्वांसिस्तद्ब्रह्म तिष्ठति ।
इति मत्वा जगत्यन्यत्किंचिन्नेच्छति चेतसा ॥ १९३ ॥
इदं स्वेष्टमिदं दुष्टमिति भावो न यद्धृदि ।
यथा न सूर्यसविधे दिनरात्र्यादिकल्पना ॥ १९४ ॥

---

१ कल्पे=जगत्प्रलयावसरे ।

एवं यः केवलं ज्ञानी सततं भजने रतः ।
रममाणः सर्वकालं मत्स्वरूपे सनातने ॥ १९५ ॥
अतो मां भक्तिसदृशं नान्यदस्ति प्रियं क्वचित् ।
इदं सशपथं प्रेम्णा कथयामि तवार्जुन ॥ १९६ ॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥**

पार्थैवं यस्य हृदये वैषम्यं नैव विद्यते ।
समः शत्रौ च मित्रे यो वर्तते प्रेमभावतः ॥ १९७ ॥
स्वगृहस्यान्प्रकाशेय ध्वांते संस्थापये परान् ।
एवं भेदं न जानाति यथा दीपो धनंजय ॥ १९८ ॥
य आत्मानं रोपयति यः शस्त्रेण च्छिनत्ति च ।
उभयोः सदृशीं छायां यथा वृक्षः प्रयच्छति ॥ १९९ ॥
अथवेक्षुः सुमधुरः पालयंतं भवेत्सदा ।
यंत्रेण पीडयंतं तु तिक्तो भवति वा कटुः ॥ २०० ॥
शत्रुं मित्रं वा समानं मत्वा तमनुवर्तते ।
तथा मानापमानादि द्वंद्वं पश्यति यः समम् ॥ २०१ ॥
शीतोष्णवर्षाकालेषु न विपर्येति खं यथा ।
प्राप्ते शीतोष्णभावेऽपि समं तिष्ठति यस्तथा ॥ २०२ ॥
दक्षिणो वोत्तरो वापि वायुर्मेरोर्यथा समः ।
तथा सुखे वा दुःखे वा यः समत्वेन वर्तते ॥ २०३ ॥
राजानं वा दरिद्रं वा चंद्रिका तुल्यसौख्यदा ।
यथा तथा जीवमात्रे यस्तुल्यं प्रेम रक्षति ॥ २०४ ॥
यद्वज्जलं जीवनीयं विद्यते जगतः समम् ।
त्रयो लोका अपि च यत्साम्येनोपासतेऽन्वहम् ॥ २०५ ॥
त्यक्त्वांऽतर्बाह्यसंबंधं मुक्त्वा विषयवासनाम् ।
एकांतवासमाश्रित्य यस्तिष्ठति सदाऽचलः ॥ २०६ ॥

**तुल्यनिंदास्तुतिर्मौनी संतुष्टो येनकेनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

निंदां श्रुत्वापि यः शांतः स्तुत्या हर्षं न मन्यते ।
यथा खं सर्वतो व्याप्तमप्यलिप्तं हि सर्वथा ॥ २०७ ॥
यो निंदां वा स्तुतिं वापि समानामेव मन्यते ।
वृत्तिं रक्षति तुल्यां यो जने यद्वत्तथा वने ॥ २०८ ॥
सत्यानृते समे यस्य मौनी सन्नपि वक्ति यः ।
ब्रह्मस्थितिं चानुभवन्न श्रयति कदापि हि ॥ २०९ ॥
यो न तुष्यति लाभेऽपि नचाऽलाभेऽपि रुष्यति ।
अवर्षणेऽप्यकूपारो न शुष्यति यथा सदा ॥ २१० ॥
वायोर्यथा न चैकत्र वास्तव्यं भवति क्वचित् ।
तद्वद्यस्याश्रयस्थानं विशिष्टं न कुतश्चन ॥ २११ ॥
वायुर्निरंतरं यद्वदाकाशं व्याप्य तिष्ठति ।
तथा जगति सर्वत्र वसतिर्यस्य संततम् ॥ २१२ ॥
मद्देहमखिलं विश्वमिति यस्य स्थिरा मतिः ।
यद्वा किं ह्यात्मरूपं मन्यते यश्चराचरम् ॥ २१३ ॥
पूर्णत्वमेवं यस्यांतस्तथास्या भजने मम ।
सभाग्यं तं मुकुटवच्छिरसा धारयाम्यहम् ॥ २१४ ॥
नमयंति जनाः साधौ मूर्धानं तन्न कौतुकम् ।
यत्पादतीर्थं वंदंति त्रैलोक्यस्था अहर्निशम् ॥ २१५ ॥
श्रद्धावतामादरस्य भवेद्धिविदिषा यदि ।
तदा समभ्यर्चनीयः सर्वज्ञः शंकरो गुरुः ॥ २१६ ॥
अस्त्वेतदखिलं ह्यत्र वर्णिते सति शंकरे ।
आत्मस्तुतिर्भवेत्तेन कृतं स्याद्विपर्यांतरम् ॥ २१७ ॥
अतो मास्तूपमात्रेयमित्यवोचद्रमापतिः ।
विद्धि पार्थास्य तात्पर्यं शिरसा तं वहाम्यहम् ॥ २१८ ॥
मोक्षाख्यं पुरुषार्थं यो मुष्टौ संगृह्य पांडव ।
स्वयं धृत्वा भ[illegible] पोत्यन्यांश्च तत्परान् ॥ २१९ ॥
[illegible] स मुंचति ।
[illegible] तिष्ठति स्वयम् ॥ २२० ॥

तस्मात्प्रणम्य तं प्रेम्णा मुकुटे धारयाम्यहम् ।
तत्पादचिह्नं हृदये स्थापयामि निरंतरम् ॥ २२१ ॥
गुणगानं तस्य पार्थ वाचस्तन्मम भूषणम् ।
तत्कीर्तिश्रवणं तद्भूषणं श्रोत्रयोश्च मे ॥ २२२ ॥
अचक्षोरपि तं द्रष्टुमुत्पन्ने चक्षुषी मम ।
करस्थकमलेनापि मद्भक्तं पूजयाम्यहम् ॥ २२३ ॥
तं क्षेमालिंगनं दातुं भुजोपरि भुजद्वयम् ।
धृत्वाभ्यवतीर्णोऽहं चतुर्दोर्द्वं ततो मम ॥ २२४ ॥
विदेहस्यापि मे देहधृतिस्तत्संगमाय हि ।
किं ब्रवीम्यधिकं तस्याऽनिवाच्यां प्रीतिरस्ति मे ॥ २२५ ॥
एवं स परमो मित्रं विचित्रं तत्र किं वद ।
नित्यं शृण्वंति मच्छ्रोत्रे तदीयं चरितं मुहुः ॥ २२६ ॥
प्राणेभ्योऽप्यधिकं भक्ताः संति प्रेमास्पदा मम ।
तेषां चरित्रं गायंतो नरा अप्यधिकं प्रियाः ॥ २२७ ॥
अयं भक्तिप्रकारो मे कथितस्तेऽधुनाऽर्जुन ।
प्रधानः सर्वयोगेभ्यो भक्तियोगोऽयमेव हि ॥ २२८ ॥
एवं प्रेमास्ति मे तस्य मूर्ध्ना तं धारयाम्यहम् ।
महत्त्वं भक्तियोगस्य ममास्त्येवं धनंजय ॥ २२९ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

एवं धर्म्यां भक्तकथामृतधारां मनोहराम् ।
श्रुत्वा तदनुकूलं ये वर्तंते प्रेमतोऽर्जुन ॥ २३० ॥
तथा श्रद्धाबलेनापि येषु सा विस्तृता भवेत् ।
चित्ते धृत्वा दृढं तां येऽनुसरंति दिवानिशम् ॥ २३१ ॥
तेषां पूर्वं कथितवत्सहजं स्यान्मनःस्थितिः ।
ततः सुक्षेत्रोप्तबीजवत्स्यात्सफलता सदा ॥ २३२ ॥
मां मत्वा परमं श्रेष्ठं मयि प्रेम निधाय च ।
सर्वस्वमिदमेवेति भावयंति च येऽर्जुन ॥ २३३ ॥
य एवं सुस्थिताः पार्थ ते भक्ता योगिनश्च ते ।
तेषां निरंतरं मत्पादुत्कंठास्ति निरंतरम् ॥ २३४ ॥